प्रे·मं· संपूजयेत्॥ आग्नेयपुरुषो रक्तवर्णः सर्वदेवमयोऽव्ययः॥ धूम्रकेतुर्गणाध्यक्षस्तस्मै नित्यं नमो नमः॥ अग्नये स
७ र्वतेजोऽधिपतये इमं सतोयमाषभक्तबलिं नमः॥ बलिं भक्षक्रतुं रक्ष यजमानं कुशलं कुरु॥ २॥ दक्षिणकलशे दंडं
पू०॥ एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चित धर्ममूर्ते॥ सुरासुराणामधिप प्रजेश शिवाय तुभ्यं सततं नमो नमः॥
इति ध्यानं॥ महामहिषमारूढं दंडहस्तं महाबलं॥ आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यतां॥ इत्यावाहनं॥ दंड
हस्तो कृष्णवर्णो धर्माध्यक्षो महाबलः॥ प्रेताधिपतये नित्यं यमराजाय ते नमः॥ इति पाद्यादिभिः पूजयेत्॥ यमेन दं
तमिति पूजनं॥ अस्मिन्यम इति कृष्णपताकां दद्यात्॥ पताकायां पुंडरीकां संपूजयेत्॥ यमश्चोत्पलवर्णाभः किरीटी
दंडधृक्सदा धर्माध्यक्षो विभुर्द्धान्मा तस्मै नित्यं नमो नमः॥ यमाय महिषवाहनाय इमं स तोयमाषभक्तबलिं नमः
बलिं भक्षक्रतुं रक्ष यजमानं कुशलं कुरु॥ ३॥ नैर्ऋत्यकलशे खड्गं पू०॥ एह्येहि रक्षोगणनायक त्वं विशालवेता
लपिशाचसंघैः ममाध्वरं रक्ष प्रभुर्भाधिनाथ लोकेश्वर त्वं भगवन्नमस्ते॥ इति ध्यानं॥ यो वै यक्षोऽपि यो देवो नैर्ऋतो नी राम·
लविग्रहः॥ महाखड्गधरो नित्यं तस्मै निर्ऋतये नमः॥ इत्यावाहनं॥ एष ते निर्ऋते भाग इति पूजनं॥ इयं देवी ति नी ७
लपताकां दद्यात्॥ तस्मिन्नामनं पूजयेत्॥ निर्ऋतिस्तु पुमान्कृष्णः सर्वरक्षोऽधिपो महान् खड्गहस्तो महासत्व

स्यामुकप्रेतस्य प्रेतत्वविमुक्तिपूर्वकाक्षयस्वर्गलोकप्राप्तिकामनया· अस्मिन्नेकादशाहकृत्ये वृषोत्सर्गकर्मणि तदं
गत्वेन अमुकदिशि अमुकदिग्पालपूजनमहं करिष्ये ॥ ततः कलशकरणं ॥ इंद्राय निर्जरेशाय सहस्राक्षाय ते नमः
इति पूर्वकलशे एह्येहि सर्वामरसिद्धसंघैरभीष्टुतो वज्रधरामरेशः संवीज्यमानोप्सरसांगणेन रक्षाध्वरं नो भगवन्नमस्ते
॥१॥ इति ध्यानं ॥ गजस्कंधसमारूढं वज्रहस्तं पुरंदरं ॥ आवाहयामि तमहं सुरराजशचीपतिं ——— ॥२॥ इत्यावा
हनं ॥ इंद्रः सुरपतिः श्रेष्ठो वज्रहस्तो महाबलः ॥ शतयज्ञाधिपो देवस्तस्मै नित्यं नमो नमः ॥ इति पाद्यादिभिः पूजयेत्
। नानारम्भे निवासं योषामिद्रेति पीतपताकां दद्यात् ॥ ततः कुसुमदलं पूजयेत् ॥ इंद्रस्तु सहस्राक्षः सद्देवाधिपो महान् वज्रह
स्तो महावाहुस्तस्मै नित्यं नमो नमः ॥ इंद्राय सुराधिपतये इमं सतोयमाषभक्तबलिं नमः बलिं भक्ष कर्तुरस्य यज
मानं कुशलं कुरु ॥१॥ तत आग्नेयकलशे शक्तिपू· ॥ एह्येहि सर्वामरहव्यवाह मुनिप्रवीरैरभितोभिजुष्टः संवीज्यमा
नोप्सरसांगणेन रक्षाध्वरं नो भगवन्नमस्ते ॥ इति ध्यानं ॥ शक्तिहस्तं ज्वलद्रूपं छागारूढं सुरोत्तमम् ॥ आवाह
यामि ज्वलनं पूजयेत् प्रतिगृह्यताम् ॥ इत्यावाहनं ॥ सर्वतेजोमयश्चैव रक्तवर्णो महाबलः ॥ शक्तिहस्तो महावीर्यो
वैश्वानर नमोस्तु ते ॥ इति पाद्यादिभिः पूजयेत् ॥ वैश्वानरेति पूजनं । अग्निर्मूर्द्धेति रक्तपताकां दद्यात् सिद्धकुसुमं ।

नै.सं. ८ मस्ते ॥ इति ध्यानं ॥ यक्षस्कंधसमारूढं गदाहस्तं महाबलं ॥ आवाहयामि धनदं पूजेयं प्रतिगृह्यतां ॥ इत्यावाहनं ॥
सर्वनक्षत्रमध्येयः सोमोराजाव्यवस्थितः शुक्लवर्णोगदाहस्तस्तस्मैनित्यंनमोनमः इमंदेवेतिपूजनं ॥ कुविदंगइति
श्वेतपताकांदद्यात् ॥ तत्रसुमुखंपूजयेत् ॥ गौरस्त्वंचयुगोजातः सर्वौषधिसमन्वितः ॥ नक्षत्राधिपतिः सौम्यस्तस्मैनि
त्यंनमोनमः ॥ कुबेरायधनाधिपतयेइमंसतोयमाषभक्तबलिंनमः ॥ बलिंभक्षक्रतुंरक्षयजमानंकुशलंकुरु ॥ ७ ॥
ईशानकलशेशूलं ॥ एह्येहि सर्वेश्वरसिद्धसंघैः त्रिशूलखट्वांगधरेणसार्द्धं यक्षेययज्ञेश्वरयज्ञसिद्धो गृहाणपूजां
भगवन्नमस्ते ॥ इतिध्यानं ॥ वृषस्कंधसमारूढं शूलहस्तं महाबलं ॥ आवाहयामिचेशानं पूजेयंप्रतिगृह्यतां ॥ इत्या
वाहनं ॥ सर्वदेवाधिपोदेवईशानः शुक्लविग्रहः ॥ शूलपाणिर्विरूपाक्षोरुद्राधिपतयेनमः ॥ ईशावास्येतिपूजनं ॥ अ
भित्वाशूरनोनुमेतिश्वेतपताकांदद्यात्तत्रसुमतिंनित्यंपूजयेत् ॥ ईशानः पुरुषः शुक्लः सर्वदेवाधिपोमहान् ॥ शूलह
स्तोविरूपाक्षस्तस्मैनित्यंनमोनमः ॥ ईशानायसर्वदेवाधिपतयेइमंसतोयमाषान्नभक्तबलिंनमः ॥ बलिंभक्षक्र
तुंरक्षयजमानंकुशलंकुरु ॥ ८ ॥ नैर्ऋत्यवरुणयोर्मध्येकलशेचक्रंपू० ॥ एह्येहि पातालधराधरेंद्रनागांगनाकि राम ८
न्नरगीयमान ॥ यक्षोरगेंद्रामरलोकसंघै रनंतरक्षाध्वरमस्मदीयं ॥ इतिध्यानं ॥ निःशेषजगदाधारमशेषसुरा

स्तस्मैनिर्ऋतयेनमः॥ निर्ऋतयेसर्वयक्षोधिपतयेइमंसतोयमाषभक्तबलिंनमः॥ बलिंभक्षक्रतुंरक्षयजमा
नंकुशलंकुरु॥४॥ पश्चिमकलशेपाशंपू०॥ एह्येहिपाशोगणनायकस्त्वंगणेशपर्जन्यसहाप्सरोभिः॥ विद्याध
रैर्होमरगीयमानयाहित्वमस्मान्भगवन्नमस्ते॥ इतिध्यानावाहनं॥ वरुणस्योत्तंभनमितिपूजनं॥ इमंमेवरुणेति
श्वेतपताकांदद्यात्॥ तत्रशंकुकर्णंपूजयेत्॥ वरुणःसोवलोविष्णुःपुरुषोनिम्नगाधिपः॥ पाशहस्तोमहातेजःस्त
स्मैनित्यंनमोनमः॥ वरुणायनिम्नगाधिपतयेइमंसतोयमाषभक्तबलिंनमः॥ बलिंभक्षक्रतुंरक्षयजमानंकुश
लंकुरु॥५॥ वायव्यकलशेअंकुशंपूजयेत्॥ एह्येहियज्ञेममरक्षणायमृगाधिरूढःसहसिद्धसंघैःप्राणाधिपः
कालकवेगाहायगृहाणपूजांभगवन्नमस्ते॥ इतिध्यानं॥ सर्वप्राणाधिपोनित्यंसर्वजंतुव्यवस्थितः॥ ध्वजहस्तो
मेघवर्णस्तस्मैनित्यंनमोनमः॥ इत्यावाहनं॥ वातोवातेतिपूजनं॥ वायोरग्नेगायेतिधूम्रपताकांदद्यात्॥ तत्रसर्व
नेत्रंपूजयेत्॥ वातस्तुसर्ववर्णोयःसर्वगंधवहःशुचिः॥ पुरुषोध्वजहस्तश्चतस्मैनित्यंनमोनमः॥ वातायसर्व
प्राणाधिपतयेइमंसतोयमाषभक्तबलिंनमः॥ बलिंभक्षक्रतुंरक्षयजमानंकुशलंकुरु॥६॥ उत्तरकलशेगदांपू
ज०॥ एह्येहियक्षेश्वरयज्ञरक्षांविधत्स्वनक्षत्रगणेनसार्द्ध॥ सर्वौषधीभिःपितृभिःसहैवगृहाणपूजांभगवन्न

प्रे·सं· चित्राय·चित्रगुप्तायवैनमः इतिनाममंत्रैरावाहनपाद्यादिभिः पृथक्पृथक्पूजयेत् इतिचतुर्दशयमपूजा ॥ त्रैलोक्ये
५ यानिभूतानिस्थावराणिजंगमानिच ॥ ब्रह्मविष्णुशिवैःसार्द्धंरक्षांकुर्वंतुतानिवै ॥ इतिप्रथमप्रार्थनांपठेत् ॥ ततोमंड
पाभ्यंतरेयजमानःप्रविश्यगृहीतपुष्पांजलिःपूर्वाभिमुखःप्रदेयः ॥ देवदानवगंधर्वयक्षराक्षसपन्नगाः ॥ ऋषयो
मुनयोगावोदेवमातरएवच ॥ सर्वेममाध्वरेरक्षांकुर्वंतुतेमुदान्विताः ॥ इतिसर्वेभ्यःपुष्पांजलिंत्यजेत् ॥ ॥
॥ अथैकादशाहश्राद्धार्थपात्रब्राह्मणनिमंत्रणादि ॥ दशाहानंतरंविप्रोवृषोत्सर्गादिपूर्वकमितिकर्मकुर्यात् ॥ त
तःपूर्वेदिनेनिरामिषमेकवारंभुक्त्वा·अस्तंगतेदिनकरेरात्रौश्राद्धकर्त्ताविप्रनिवेशनंगत्वासर्वभुक्तजनगृहेगोम
योपलिप्तायांदक्षिणनिम्नवत्यांभूमौब्राह्मणमुदङ्मुखमुपवेश्यकृतापसव्योदक्षिणाभिमुखःपातितवामजानुः
॥ तांबूलमादायप्रेतब्राह्मणंनिमंत्रयेत् ॥ अशौचांतद्वितीयेह्नि अमुकगोत्रस्यामुकप्रेतस्यैकादशाहश्राद्धकृत्ये
भवंतंप्रेतब्राह्मणमभिरूपनीतद्रव्येस्तांबूलेनत्वामहंनिमंत्रयेत् ॥ ॐ गतोसिदिव्यलोकंत्वंकृतांतविहितःपथः राम·
मनसावायुभूतेनविप्रत्वाहंनिमंत्रयेत् ॥ आमंत्रितोस्मितेनोक्ते ॥ अक्रोधनैरितिपठित्वाविप्रमुद्दिश्य ॥ इतिब्रा ५
ह्मणंनिमंत्र्यपूर्वेदिनेतद्दिवो ॥ यद्यविघ्नेनरजनीयास्यतितर्हिश्वःकालेसर्वमेतत्करिष्यामीति ॥ तेनोक्ते ॥ सू

गणार्च्चितं ॥ आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यताम् ॥ इत्यावाहनं ॥ पन्नगाधिपतिर्देवअनंतोनामधूम्रकः ॥ पाता-
लेवसतेनित्यमनंतायनमोनमः ॥ नमोस्तुसर्पेभ्यइतिपूजनं ॥ येमारोचनेतिधूम्रपताकांदद्यात् ॥ तत्रधातारंपूजयेत्
इमंयोऽनंतरूपेणब्रह्मांडंसचराचरं ॥ पुष्पवद्धारयेन्मूर्ध्नितस्मैनित्यंनमोनमः ॥ अनंतायसर्वयज्ञाधिपतयेइमंस-
तोयमाषभक्तबलिंनमः ॥ बलिंभक्षक्रतुंरक्षयजमानकुशलंकुरु ॥ ९ ॥ ईशानसोमयोर्मध्येकलशोपद्मंपूजयेत् ॥ एह्ये-
हिविश्वाधिपतेसुरेशलोकेशसार्द्धंपितृदेवताभिः ॥ सर्वस्यधातास्यमितप्रभावोविश्वाध्वरंनःसततंशिवाय ॥ श्वेतहं-
ससमारूढंपद्मयोनिंजगद्गुरुं ॥ आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतां ॥ इत्यावाहनं ॥ पातालकुसुमाकारोब्रह्मस-
र्वार्थसूत्रधृक् ॥ सर्वलोकपतिर्ज्येष्ठस्तस्मैनित्यंनमोनमः ॥ आब्रह्मन्नितिपूजनं ॥ ब्रह्मयज्ञानमितिसर्ववर्णपता-
कांदद्यात् ॥ तत्रविधातारंपूजयेत् ॥ पद्मयोनिश्चतुर्मूर्त्तिर्वेदाधारपितामहः ॥ यज्ञाध्यक्षश्चसनंतनस्तस्मैनित्यंनमोन-
मः ॥ ब्रह्मणेसर्वलोकाधिपतयेइमंसतोयमाषभक्तबलिंनमः ॥ बलिंभक्षक्रतुंरक्षयजमानकुशलंकुरु ॥ १० ॥
इतिदिग्पालपूजनं ॥ अथचतुर्दशयमआग्नेयानैर्ऋत्यांतंचतुर्दशकलशोपरिसंस्थाप्य ॥ यमाय· धर्मराजाय·
मृत्यवे· चांतकायच· वैवस्वताय· कालाय· सर्वभूतक्षयायच· औदुम्बराय· दध्नाय· निलाय· परमेष्ठिने· वृकोदराय·

प्रे·मं· पसव्येन कुशत्रययवतिलजलान्यादाय ॥ अद्येत्यादि कालज्ञानं कृत्वा अशौचांतर्द्वितीयेह्नि अमुकगोत्रस्यामु
१० कप्रेतस्य प्रेतत्वविमुक्तिकामस्य स्वर्गलोकगमनवासमुखशयनार्थं कामायइमां शय्यां सोपकरणां विष्णुदैवतां फ
लवस्त्रसमन्वितांऽङ्गानांगिरसदैवतां वा यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ब्राह्मणाः
स्वस्तीत्युक्त्वा सोपकरणशय्यां स्पृशेत् ॥ कृतैतच्छय्यादानप्रतिष्ठासिद्ध्यर्थं दक्षिणां हिरण्यमग्निदैवतं तन्मूल्यो
पकल्पितद्रव्यं वा अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ॥ स्वस्तीति प्रतिवचनं ॥ ततः फलव
स्त्रसमन्वितां कांचनपुरुषप्रतिमां पूजयेत् ॥ ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञं
ॐ समिमं दधातु विश्वेदेवास इह मादयंतामोंप्रतिष्ठापयेत् ॥ पाद्यार्घ्याचमनीयस्नानगंधधूपदीपनैवेद्यताम्बूल
द्रव्याक्षतैः संपूज्य ब्राह्मणाय निवेदयेत् ॥ अद्याशौचांतर्द्वितीयेह्नि अमुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्तिपू
र्वकास्य परअक्षय्यस्वर्गाद्युत्तमलोकगमनकामायइमं कांचनपुरुषं फलवस्त्रसमन्वितं विष्णुदैवतं यथाना राम·
मगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ॥ स्वस्तीति प्रतिवचनं ॥ अद्य कृतैतत्फलवस्त्रसमन्वितकां १०
चनपुरुषदानप्रतिष्ठासंसिध्यर्थं दक्षिणां हिरण्यमग्निदैवतं तन्मूल्योपकल्पितं द्रव्यं वा अमुकगोत्रायामुकश

र्घोदयेपात्रब्राह्मणस्यकेशश्मश्रुकर्मनखच्छेदंकारयित्वाताम्रपात्रेणतैलोद्वर्तनोपकरणम्॥ अशौचांतद्वि
तीयेह्निनदीतीरेगृहेवान्यशुद्धभूमौवाग्रामाद्भूमिंप्रकल्प्यपंचगव्येनोपलिप्यज्वलदंगारैःसंशोध्यगौरमृत्तिका
माच्छाद्यतिलसर्षपैश्चप्रविकिरेत्॥ पाकस्थानेतिलान्निकीर्य॥ ततःस्त्रीद्वारास्वयंवापिंडार्थंनूतनभांडेपाका
मारभेत्॥ ततःपादार्घ्यपात्रदाने॥ इदंपाद्यमितिपात्रंदत्वा द्विजंनमस्कृत्यप्रेतहितमुद्दिश्यतिलतैलेनजानुनी
पादौब्राह्मणस्यप्रक्षालयेत्॥ ततस्तिलजलैःपादार्घ्यमापूर्यब्राह्मणचरणंप्रक्षाल्यपादार्घ्यंप्रदापयेत्॥ अमुकगोत्रस्या
मुकप्रेतस्यएकादशाहकृत्येएषःपादार्घ्योमयादीयतेतवोपतिष्ठताम्॥ ततःपादार्घ्यांचमनीयंस्वयमाचम्यपाकस्थानं
गत्वा॥ ततःआसनंनिवेश्यप्रथमतःब्राह्मणायशय्यांदद्यात्॥ शय्यास्थापनदानसंग्रहे॥ देवशय्याशिरःप्राच्या
मस्वशय्यातुदक्षिणे॥ पश्चिमेतीर्थशय्यासांप्रेतशय्याशिरोत्तरे॥ अथब्राह्मणवरणं॥ अद्यकर्तव्यशय्यादानादिदान
निमित्तकममुकशर्माणंब्राह्मणमेभिरुपनीतद्रव्यैस्त्वामहंवृणे॥ वृतोस्मीतिप्रतिवचनं॥ ततःपूर्वाभिमुखोदङ्मुखो
वाशय्यांदद्यात्॥ सोपस्करणायैनमः इतिब्राह्मणायचतुर्थ्यंतेनपूजयेत्॥ फलवस्त्रसमन्वितंगंधादिभिःब्राह्म
णायचसंपूज्य॥ इमांशय्यांसोपकरणांब्राह्मणायददामीति द्विजकरेजलेदानंवारिणाशय्यामभिषेचनंच॥ ततो

शय्यायै

प्र.मं. ११

वावश्यके प्रथमवर्षे ऽनधिकारः ॥ तत्राशौचांतर्हितीयाद्‌ स्ववृषोत्सर्गकालः ॥ तकार्त्तिक्यादिकालः ॥ अथवृषभ
लक्षणं ॥ पृथुकर्णो महास्कंधो सूक्ष्मरोमा च यो भवेत् ॥ श्वेतोदरः कृष्णपृष्ठो ब्राह्मणस्य प्रशस्यते ॥ लोहितो यस्य
गात्रेषु खुरपुच्छेषु पांडुरः ॥ ललाटे तिलकं यस्य स क्षत्रियस्य वृष उच्यते · कांचनाभोतु वैश्यस्य शूद्रस्य कृष्ण उच्यते ॥ शृं
गेनोल्लेखयते भूमिं यत्र क्वचन हृष्यति ॥ पितॄणामन्नपानं तु प्रभूतमुपतिष्ठति ॥ सूतकांतर्हितेऽन्हि वृषोत्सर्गप्रश
स्यते ॥ तस्याभावे च कार्त्तिक्यां चैत्र्यां संवत्सरादिने ॥ उत्सृष्टो वृषभो यस्मिन्पिबत्यथ जलाशये ॥ तज्जलं च सुधा
तुल्यं पितॄंस्तत्रोपतिष्ठति ॥ त्रिहायणो वृषः वत्सतर्यो त्रिहायण्यो वा सर्वलक्षणवृषं निरूप्य ॥ अद्याशौचांतर्हिते
ऽह्नि अद्यामुकगोत्रस्यामुकप्रेतस्योत्सृज्यमानवृषभवत्सतरीचतुष्टयरोमसमसंख्यकवर्षकोटिसहस्रावच्छि
न्नरुद्रलोकनिवासपूर्वकतदुत्सृष्टपुच्छाग्रजलपितृतृप्तिपूर्वकतदुद्धृतकूलशृंगाग्रस्थितमृत्तिकासमक
लितभक्ष्यभोज्यतृप्तिपूर्वकगोमध्यकृतक्रीडासाकालिकाप्सरोगणसेवितविमानारोहणपूर्वकपितृगणतृप्ति
कामः सोपकरणवत्सतर्यश्चतुष्टयसहितनीलवृषोत्सर्गमहं करिष्ये ॥ तत्रादावीशाने रुद्रकलशं सर्वौषधिभिः
शन्नोदेवीत्यादिमंत्रेण संस्थाप्य संपूज्य · पुरुषसूक्तं रुद्राध्यायं जपेत् ॥ ततो मंडपाभ्यंतरे नैव ऋत्यपश्चिमयो

राम. ११

मेणे ब्राह्मणाय तुभ्यमहं संप्रददे ॥ स्वस्तीति प्रतिवचनं ॥ ततः सोपकरणशय्यां काचनं पुरुषः स्पृशेत् स्थापयेत् ॥ तत
द्विजदंपती पुष्पाक्षतैः संपूजयेत् ॥ अद्याशौचान्त द्वितीयेऽह्नि अमुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्तिकामः स्वर्गा
द्युत्तमलोकगमनकामः द्विजदंपतीपूजनमहं करिष्ये ॥ इति कुशत्रययवतिलजलैः संकल्पः ॥ अथ द्विजदंपती
भ्यां नमः ॥ इत्यर्घगंधाक्षतपुष्पधूपदीपनैवेद्यवासोभिः पूजयेत् ॥ अद्यैतानि गंधपुष्पधूपदीपनैवेद्यादि विभूषणा
वासांसि द्विजदंपतीभ्यां नमः ॥ पंचपात्रं च देयं ॥ अथ संकल्पः ॥ अद्येत्यादि अमुकगोत्रस्यामुकप्रेतस्य प्रेतत्ववि
मुक्तिकामः स्वर्गाद्युत्तमलोकवासकामनया सूपोदनादीनि इमानि पंचपात्राणि भोजनपाकार्थं अमुकगोत्रायामु
कशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ॥ इति केचित् स्वस्तीति वचनं ॥ पात्रदानप्रतिष्ठार्थं दक्षिणां दद्यात् ॥ अथ वृ
षोत्सर्गारंभः ॥ एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् यजेत वाश्वमेधेन नीलं वृषभमुत्सृजेत् ॥ तत्राशौचान्त द्वि
तीयेऽह्नि वृषोत्सर्गः कर्त्तव्यता कार्तिकी चैत्री वैशाखी वा रेवती युताश्वयुज्यो जीवनवृषोत्सर्गकालः ॥ ततो मातृपू
जापूर्वकं नांदीमुखश्राद्धं कृत्वा गवां गोष्ठे पंचभूःसंस्कारान्कृत्वा लौकिकाग्नेः स्थापनं कुर्यात् ॥ पितृब्राह्मणं वृ
णुयात् ॥ संवत्सरादुपरि यदा क्रियते काम्यवृषोत्सर्गस्तदानेन प्रकारेण कर्तव्यः अभ्युदयिकश्राद्धसंबंधिकर्मणि

त्वायेति मंत्रेण चंदनाक्षतपुष्पवस्त्रालंकारैस्तांबूलैर्ब्राह्मणमभ्यर्च्य ॥ कुशयवजलान्यादाय ॥ अद्येत्याद्यमुकगोत्र।
स्यामुकप्रेतस्य प्रेतत्वविमुक्तिकामस्य स्वर्गाद्युत्तमलोकगमनकामनयावत्सरीचतुष्टयसहितवृषोत्सर्गांगभूतहोमा
दिसकलकर्मकर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिश्चंदनतांबूलवासोभिराचार्यत्वेन त्वामहं वृणे इति वृणुया।
त् ॥ स्वस्तीति प्रतिवचनं ॥ तस्य पूजादि विधाय ॥ अनेनैव क्रमेण ब्रह्मावरणं· हवनकर्मकर्तृप्रतिष्ठाद्युकर्तीपृच्छेत् ॥
भो ब्राह्मण यथाविहितं कर्म कुरु ॥ भो ब्राह्मणास्मिन्कर्मणि त्वमेव ब्रह्मा भवः भवामीति प्रतिवचनम् ॥ अद्यामुकगोत्रस्या
मुकप्रेतस्य कर्तव्यवृषोत्सर्गांगभूतहोमकर्मकर्तुममुकगोत्रममुकशर्माणमेभिः पुष्पाक्षततांबूलवासोभिरभ्यर्च्य हो
तृत्वेन त्वामहं वृणे ॥ वृतोस्मीति होता प्राङ्मुखउपविश्य ॥ अथ कुशकंडिकाकरणं ॥ तत्र क्रमः मृन्मयपात्रमध्ये पिष्टादिना मेरुं
कृत्वैकदेशे जलं ॥ अपरस्मिन्देशे क्षीरं च कुर्यात् ॥ पात्रजलसेचनंचरेत्क्षीरसेचनं हस्तमात्रपरिमितचतुर
स्रां भूमिं शुद्धायां भूमौ दर्भैः परिसमूहनं तानैशान्यां परित्यज्य गोमयोदकेन तेनोपलेपनं· खादिरस्रुवमूलेन प्रादेशमि
त उत्तरोत्तरक्रमेण त्रिरुल्लिख्य· उल्लेखनक्रमेणानामिकांगुष्ठाभ्यां मुद्धृत्य हस्तेनोद्धरणं ॥ उदकेनाभ्युक्षणं ॥ एतेपंच
भूःसंस्कारान्कृत्वा ॥ यत्र यत्राग्नेःस्थापनं तत्र तत्र क्रियते तत्र तूष्णीं कांस्यपात्रस्थमग्निमानीय स्वाधं प्रत्यङ्मुख

मध्ये तृणमंडपं कारयेत्॥ तन्मध्ये सप्त प्रेतमातॄः स्थापयेत्॥ तत्र प्रतिष्ठासेंदुरादिभिः प्रेतमातॄ निरूप्य कर्पास
बीजं संपूज्य अष्टधातुमिलितं लोहं च तत्र संस्थाप्य॥ तद्यथा॥ कराली १ भीषणा २ रौद्री ३ यमदंष्ट्रा ४ कृशोदरी ५
उग्रचंडा ६ महाकाली ७ सप्त प्रेताः प्रेतमातरः॥ अद्याशौचान्तद्वितीयेऽह्नि अमुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्तिकामः स्वर्गो
द्युतमलोकप्राप्तिकामनया सप्त प्रेतमातॄः पूजनमहं करिष्ये॥ इति संकल्पः॥ ॐ करालिन्यै नमः १ भीषणायै नमः २
रौद्र्यै नमः ३ यमदंष्ट्रायैः ४ कृशोदर्यै नमः ५ उग्रचंडायै नमः ६ महाकाल्यै नमः ७ इति गंधादि अक्षत पुष्प धूप दीप तां
बूल समाधान्न संप्तवटकैः नैवेद्याचमनीयताम्बूलादीनि प्रत्येकं समर्पयेत् संपूज्य. एतत्पूजनसांगतासिध्यर्थं लो
हदक्षिणां ब्राह्मणाय दद्यात्॥ तत्समीपे कलशं स्थापयेत्॥ सप्तमृण्मयमात्रेण शन्नो देवी निजलं निक्षिप्य. यवो सीति य
वान्॥ तिलो सि तिति तिलान्। पवित्रस्थे ति पवित्रकं. तज्जलं सिरस्याभिषिच्य ततः सव्येन पूर्वाभिमुखो रुद्रं ध्यायं पुरु
षसूक्तं यच्चाद् देवहेडनमिति जपेत्॥ ततोऽपसव्येन कुशयवजलान्यादाय॥ अद्याशौचान्तद्वितीयेऽह्नि अमुकगोत्रस्या
मुकप्रेतस्य प्रेतत्वविमुक्तिकामः स्वर्गो द्युतमलोकप्राप्तिकामनया वत्सतरी चतुष्टयसहितवृषोत्सर्गयज्ञं ब्राह्मणद्वारा हवनमहं क
रिष्ये॥ इति संकल्पः॥ स्वकर्तृपक्षे आचार्य्यवरणं भावः॥ ब्राह्मणकर्तृपक्षे आचार्य्यवरणं ब्रह्मावरणं च॥ नमोस्त्वनं॥

ॐ पूषांअन्वेतु नः पूषारक्षंतु सर्वतः पूषावाजंसनोतु नः स्वाहा· इदं पूष्णे॥ ततः पायसपिष्ट चरूमाज्यमेकीकृत्यगृहीत्वा
जुहोति॥ अग्नयेस्विष्टिकृतेस्वाहा· इदमग्नयेस्विष्टिकृते॥ एततासमाहुतशेषोग्रादेव॥ पुनराज्येनहोमः॥ ॐ भूःस्वाहा·
इदमग्नये॥ ॐ भुवःस्वाहा· इदंवायवे॥ ॐ स्वःस्वाहा· इदंसूर्य्याय॥ ॐ तन्नोअग्नेवरुणस्येति॥ ॐ सत्वन्नोइति॥ आया
श्चाग्नेइति॥ एतेशतंमिति॥ उदुत्तममिति॥ इतिप्रायश्चित्तसंज्ञकोहोमः॥ ततःसंश्रावप्राशनं॥ ततोब्रह्मणेपूर्णपात्रदा
नंदक्षिणांच॥ तत्रवाक्यं॥ अद्येत्यादिअशौचांतर्हितीयेह्नि कर्तव्यवृषोत्सर्गांगभूतहोमकर्मकृताकृतावेक्षकत्वेनब्रह्म
कर्मप्रतिष्ठासंसिध्यर्थमिदंपूर्णपात्रं अमुकगोत्रायामुकशर्मणेब्रह्मणेदातुमहमुत्सृजेत्॥ ततोवर्हिर्होमः॥ देवागा
तुविदोगातुवित्वागातुमितीमनुः सस्पतमसुदेवयज्ञ ॐ स्वाहावातेधा वर्हिर्होमः॥ ततःप्रणीताःविमोकः॥ ॐ सुमित्रिया
नआपःऔषधयःसंतुइतिप्रणीताजलेनशिरःसमार्ज्जे॥ ॐ दुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मइत्यैशा
न्यांप्रणीतान्यूब्जीकुर्य्यात्॥ पवित्रं वह्नौक्षिपेत्॥ ततःपूर्णाहुतिहोमः॥ आचार्य्यायदक्षिणादानम्॥ तत्रवाक्यं॥ अ
द्येत्याद्यशौचांतर्हितीयेऽन्हि अद्यकर्तव्यवृषोत्सर्गांगभूतकृतेनहोमकर्मप्रतिष्ठासंसिध्यर्थंहिरण्यमग्निदैवतंत
न्मूल्योपकल्पितंद्रव्यंवा अमुकाचार्य्यत्वेनत्वामहंसंप्रददे॥ स्वस्तीतिप्रतिवचनं॥ ततोरुद्राध्यायंपठित्वा॥ ततोलोह

अग्निमुपसमाधायाग्निं स्थापयेत्॥ ततोग्ने र्दक्षिणतः स्रुद्ध्मासनं दत्वा तदुपरि प्रागग्रान्कुशानास्तीर्य्य॥ तत्रोपरि ब्र-
ह्मोपवेशयित्वा प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्ने रुत्तरतः कुशोपरि
निदध्यात्॥ प्रोक्षणीपात्रं निधाय॥ बर्हिषादिसकलकुशकंडिकाकरणं॥ इति कुशकंडिका॥ तदनंतरं होममारभेत्
ॐकाररहिताः षडाज्याहुतीर्जुहुयात्॥ स्रुवावस्थितहुतशेषं प्रोक्षणीपात्रे प्रक्षेपः॥ स्रुद्ध्माज्येनाहुतिं दद्यात् यथा
इह रतीस्वाहा· इदमग्नये १॥ इह रमध्वं स्वाहा· इदमग्नये॥ २॥ इह धृती स्वाहा· इदमग्नये ३॥ इह स्वधृती स्वाहा· इद-
मग्नये ४॥ उपसृजं धरुणं मात्रे धरुणो मातरं धयन्स्वाहा· इदमग्नये ५॥ रायस्पोषमस्मासु दीधरत्स्वाहा· इदमग्नये
६॥ ब्रह्मणान्वारब्धः॥ अघारावाज्यभागौ जुहोति॥ मनः प्रजापतये स्वाहा· इदं प्रजापतये॥ मनसैव जुहोति इंद्राय स्वा-
हा· इदमिंद्राय॥ अग्नये स्वाहा· इदमग्नये॥ सोमाय स्वाहा· इदं सोमाय॥ एताः समाहुतीर्नांहुतशेषस्य पात्रांतरे प्रक्षेपः
॥अथ पायसहोमः॥ ॐकारसहितः॥ ॐ अग्नये स्वाहा· इदमग्नये॥ ॐ रुद्राय स्वाहा· इदं रुद्राय॥ ॐ सर्वाय स्वाहा·
इदं सर्वाय॥ ॐ पशुपतये स्वाहा· इदं पशुपतये॥ ॐ उग्राय स्वाहा· इदमुग्राय॥ ॐ आसनाय स्वाहा· इदमासनाय॥ ॐ
भवाय स्वाहा· इदं भवाय॥ ॐ महादेवाय स्वाहा· इदं महादेवाय॥ ॐ ईशानाय स्वाहा· इदमीशानाय॥ अथ पिष्टचरुहोमः

श्री·मे· माल्याद्यलंकृत्यवृषस्यश्रवणेजपेत्॥ वृषोसिभगवन्धर्म्मेचतुःपादःप्रकीर्तितः॥वृणोमितमहंभक्त्यासमांरक्ष
१५ तुसर्वतः॥सत्वंवृषभरूपेणगवामानंदकारकः॥अष्टमूर्तेरधिष्ठानअतःपाहिसनातन॥त्वयिमग्नेस्यपालो
काःप्रेतःसंतुनिरामयः॥इतिध्यानं॥अथन्यासः॥त्र्यंबकंयजामहेइतिशिरसि॥नमस्तेरुद्रमन्यवेतिललाटे॥
नमःशंभवायेतिमुखे॥प्राणायस्वाहेतिनासिकायां॥नीलग्रीवाशितिमितिग्रीवायां॥यज्ञाग्रतइतिवक्षोः॥शि
वोनामेतिलांगूले॥वृषाग्निवृषणंजरन्नितिवृषणे॥त्र्यंबकंयजामहेइतिशरीरन्यासः॥ततोवत्सरीसहितंवृषभंपू
जयेत्॥अद्येत्याद्यशौचांतर्द्दितीयेऽह्नि अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्तिकामस्तथा स्वर्गाद्युत्तमलोकवासका
मनसाएकादशाहकृत्यंचतुष्टयवत्सरीसहितवृषभपूजनमहंकरिष्ये॥तत्रक्रमः॥वत्सरीभ्योनमः॥धर्म्मरूपाय
वृषायनमः॥इतिपाद्यार्घ्याचमनीयस्नानादिभिरुपचारैःसंपूजयेत्॥ततःकुशयवतिलजलान्यादाय॥अथोत्सर्गः
संकल्पः॥अद्येत्यादीनि वाक्यंपठित्वा॥अशौचांतर्द्दितीयेऽह्नि अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्तिकामस्यस्वर्गाद्यु राम·
त्तमलोकप्राप्तिकामः सकलदुरितोत्सारितअश्वमेधादियज्ञफलप्राप्तिरंभाद्यप्सरोगणसेवितकिन्नरगीयमानगंधर्व १५
दुंदुभिमृदंगवाद्यमानतद्वर्नेनि नाभिरूपशोभितमानचामरदिव्यरूपशोभितहिरण्यमयमणिसंपूज्यकमल।

कारमाहूय वृषभं लांछयेत्॥ इमा रुद्राय मिति दक्षिणपार्श्वे द्वादशांगुल्यो त्रिशूलं लिखेत्॥ रुद्रँ सँसृजदिति वा
मपार्श्वे षडंगुलं चक्रं न्यसेत्॥ अष्टांगुलं भवेच्चक्रं त्रिशूलं द्वादशांगुलं॥ तज्ज्ञन्यास्तु प्रमाणेन दाहयित्वा क्षिपेत्ततः॥ द
धिगोमययोर्मध्ये स्नापयित्वाङ्कितं पुनः अलंकृत्य कुमारीभिः सहिताभिर्विवाहयेत्॥ होतुर्वै वस्त्रयुगं दद्यात्सुवर्णं कांस्य
मेव च॥ उपस्करं च दातव्यं येनतं मनसेप्सितं॥ ततो वत्सरी चतुष्टय सहितं वृषभं सर्वौषधिभिः सह रुद्रकलशजलेन स्ना
पयेत्॥ अथ सर्वौषधिः॥ सुरामासीजटाकुष्ठी शैलेयं रजनीद्वयं॥ सटी चंपकमुस्ता च सर्वौषधिगणाः स्मृताः॥ तत्र॥
मंत्रा॥ हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः याअग्निं गर्भं दधिरे सुवर्णास्ता न आपः स्योनानासुभवा
भवंतु॥ यासां राजा वरुणो जाति मध्ये सत्यानृते अपपश्यं जनानां जाय अपि गर्भं दधि सुवर्णः वासा या देवा दिवि कृण्वंति
भक्षपापं अन्तरिक्षे वहुधा भवंति॥ या पृथिवी पराभवोवदं निस्त्रुक्रास्तान आपः स्योना भवत्ति शिवेन मा चक्षुष्यामाप
श्यता यः शिवजातन्वोपास्पृशतान्वं च मे घृतश्चुतः शुचयो याः पावकास्ता न आपः सः स्योना सुहवा भवंतु शन्नो देवीरभि
ष्टय आपो भवंतु पीतये शंयोरभिस्रवंतु नः॥ इति मंत्रेण सर्वौषधिमिश्रितजलेन चतुर्वत्सरीभिः सहितं वृषभं स्नापये
त्॥ चतुर्वत्सरीसहितं वृषभं संपूज्य॥ वृषभस्य दक्षिणकर्णे जपेत्॥ लोहघंटां गले बध्वा पृष्ठे च वस्त्रधारणं गले

सं.
१५
समानंआयुःप्रमोषि॥ ॐ स्वर्णधर्मःस्वाहा॰स्वर्णोर्कःस्वाहा॰॥स्वर्णशुक्रःस्वाहा॥स्वर्णज्योतिःस्वाहा॥स्वर्णसूर्य्यःस्वा
हा॥ अथतिलश्राद्धकर्त्तव्यता॥तिलश्राद्धंकरिष्यामियवपिष्टेनधीमता॥तिलःसर्करयायुक्तंतत्पर्णंचततःपठेत्॥यव
चूर्णेनतिलघृतमधुशर्कराभिर्तिलमुखाग्रेपिंडांपौराणिकमंत्रेणदद्यात्॥ततोऽपसव्यम्॥पितृपक्षाश्चयेकेचिद्येचा
न्येमातृपक्षकाः॥गुरुस्वसुरबंधूनांयेकुलेषुसमुद्भवाः॥तेसर्वेतृप्तिंगच्छंतुतिलपिंडंददाम्यहम्॥येचान्येलुप्तपिंडाश्च
पुत्रदारविवर्ज्जिताः॥तेसर्वे॰॥ आब्रह्मणोयेपितृवंशजातामातुस्तथावंशोद्भवामदीयाकुलद्वयेयेममवंशभूताभृत्या
स्तथावा ——→ श्रितसेवकाश्च॥तेसर्वे॰॥ मित्राणिशिष्यापशवश्चवृक्षाःदृष्टाश्चस्पृष्टाश्च कृतोपकाराः॥देशांतरेयेममसंग
ताश्चतेभ्यःस्वधास्तस्मइदंददामि॥तेसर्वेतृप्तिंगच्छंतुति॰ येबांधवाबांधवावायेन्यजन्मनिबांधवाः॥ आकालेऽपगता
येचयेचांधाःपंगवस्तथा॥तेसर्वे॰॥ विरूपाआमगर्भाश्चयेज्ञाताज्ञाताःकुलेमम॥आमगर्भाश्चयेकेचिद्दग्धानागुस्वगो
चरे॥तेसर्वे॰॥ वृषयोनिगतायेचकीटकादिपतंगकाः॥तेसर्वे॰॥ नरकेरौरवेजाताःकुंभिपाकेचयेगताः॥तेसर्वेतृप्तिंग राम.
च्छंतुतिलपिंडंददाम्यहम्॥ तत्रतेलेचसीयंतेयमलोकमहाभये॥तेसर्वे॰॥ किंकरैःपीड्यतेयेचसुदृढाभिक्षुकांडवत्॥ १५
तेसर्वे॰॥ जलेनपीडितापंकयमदूतैर्महाबलैः॥तेसर्वे॰॥ यत्रमध्येप्रपीड्यंतेभेतपीडाव्यवस्थिताः॥तेसर्वे॰॥कुष्ठापस्मा

महाविमानस्थिततुंवरादिगंधर्वेंद्रादिसुरपूजितमरकतमणिहारकमणिमयसिंहासनस्थितदिव्यभूषणमुक्ताहा
राद्यलंकृतसुवर्णमयतनुकमलासनयावद्वृषभगोलोमततत्कोटिदिव्यवर्षसहस्रस्वर्गप्राप्तिमक्षिमजललांगूलसृंगा
ग्रमृत्तिकावत्कोटिदिव्यवर्षस्वर्गप्राप्तिपितृपितामहादितृप्तिहेतुपतितप्रेतोद्धरणसप्तावरणसप्तपरमितपितृदेवत्व
हेतुसत्यलोकवासकामः॥ इमं वृषभं वत्सरीचतुष्टयसहितमहमुत्सृजेत्॥ इति संकल्पः॥ सलं युवानं पतिं वो ददा
मि तेन क्रीडन्तीश्चरथ प्रियेण मा नः साप्तजनुषा सुभगा रायस्पोषेण समिषा मदेम इत्यनेन यात्रावासमु
त्सृजेत्॥ अनेन वाक्येन प्रदक्षिणं कृत्वा ईशान्यां दिशि चालयेत्॥ ततो वत्सरीचतुष्टयमध्यगतं वृषभमभिमंत्रयेत्
॥तत्र मंत्राः॥ समुद्रोसि नभस्वानार्द्रदानुः शंभोर्मयोभूरभिमाव्याहि स्वाहा॥ मारुतोसि मरुतां गणः शंभूर्मयोभूरभिमावा
हि स्वाहा वस्युरसि दुवस्वान् स्वाहा। बभूर्मयोभूरभिमावाहि स्वाहा। मरुतां गणः शंभूर्मयोभूरभिमावाहि स्वाहा॥ यास्ते
अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः ताभिर्नो अद्य सर्वाभी रुचे जनाय नस्कृधि॥ या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रु
चः इन्द्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते॥ ॐ रुचं नो धेहि ब्राह्मणेषु रुचं ॐ राजसु नस्कृधि रुचं वैश्येषु शू
द्रेषु मयि धेहि॥ रुचा रुचं तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः अहेडमानो वरुणेह बोध्युरुशंस ॐ

गपत्न्याश्च नागाश्चैव सपर्वताः॥ ते सर्वे तृ०॥ पृथिव्यापश्च तेजश्च वायुराकाशमेव च॥ ते सर्वे०॥ पिशाचा गुह्यकाः सेना:
गणा गंधर्वराक्षसाः॥ ते सर्वे०॥ दिवि भुव्यंतरिक्षे च ये च पातालवासिनः॥ ते सर्वे०॥ शिवः शिवा तथा विष्णुः सिद्धिर्लक्ष्मी
सरस्वती॥ ते सर्वे०॥ तपोधनश्च भगवानव्यक्ताव्यक्तः परमेश्वरः॥ ते सर्वे०॥ क्षेत्रौषधिलता वृक्षा वनस्पत्यधिदेवताः॥ ते
सर्वे०॥ कपिलः शेषनागाश्च तक्षकोऽनंत एव च॥ ते सर्वे०॥ अनेकजलचरा जीवा असंख्यातास्त्वनेकशः॥ ते सर्वे०॥ च
तुर्दशाय मश्चैव ये चान्ये यमकिंकराः॥ ते सर्वे०॥ सर्वे च यक्षा राजानः पशवः पक्षिणस्तथा॥ ते सर्वे०॥ स्वेदजोद्भिज
जातीया अंडजाश्च जरायुजाः॥ शांतिदाः शुभदास्ते स्युः तिलपुंजेषु तर्पिताः॥ ततोऽपसव्यं दक्षिणाभिमुखः कुशतिल
युतजलान्यादाय॥ मातृपक्षाश्च ये केचिद्ये चान्ये पितृपक्षकाः॥ गुरुश्वशुरबंधूनां ये कुलेषु व्यवस्थिताः। ते
सर्वे तृप्तिमायांतु तिलपुंजेषु तर्पिताः॥ ये चान्ये लुप्तपिंडाश्च पुत्रदारविवर्जिताः॥ ते सर्वे०॥ आब्रह्मणो ये पितृवंशजा
ता मातुस्तथा वंशोद्भवा मदीया कुलद्वये ये मम वंशभूता भृत्यास्तथाश्रितसेवकाश्च॥ ते सर्वे तृप्तिमायांतु तिलपुंजेषु तर्पि- श्रा.म.
ता॥ मित्राणि शिष्याः पशवश्च वृक्षाः दृष्टाश्च स्पृष्टाश्च कृतोपकाराः देशांतरे ये मम संगताश्च तेभ्यः स्वधा कृत्य इदं ददा १९
मि॥ ते सर्वे०॥ ये बांधवाऽबांधवा वा येऽन्यजन्मनि बांधवाः ते सर्वे तृ०॥ अकाले अपगता ये च ये चांधापंगवस्तथा॥ ते सर्वे०॥

रलूता येजलोदरभगंदरैः॥तेसर्व्वे०॥ गंडमालापांडुरोगैःक्षयव्याधीमृताश्चये॥तेसर्व्वे०॥कारागृहेमृतायेच व्याघ्रभीर्निहता
स्तथा॥तेसर्व्वे०॥ चांडालैर्निहता मार्गेअशौचशयनेमृताः॥तेसर्व्वे०॥ ब्रह्मस्वहारिणायेचसुरापोब्रह्महारिणाः॥तेसर्व्वे०॥कु
जाश्चबधिरायेच पितृमातृकुलोद्भवाः॥तेसर्व्वे०॥ संसाररहितायेचरौरवादिषुयेगताः॥तेसर्व्वे०॥ वृक्षयोनिगतायेचतृणगु
ल्मलतास्थिताः॥तेसर्व्वे०॥ देवत्वंमानुषत्वंचतिर्य्यक्त्वंप्रेतपिशाचकाः॥तेसर्व्वे०॥ कृमिकीटपतंगत्वं गतायेचस्वकर्मणा॥ते
सर्व्वे०॥रौरवेनरकेजाताःकुंभिपाकेचयेगताः॥तेसर्व्वे०॥ आसुरीयोनिसमुत्पन्नाःपिशाचत्वंचयेगताः॥तेसर्व्वे०॥ उद्धुंदनरके
जाताऊर्द्धवक्रस्थिताश्चये॥तेसर्व्वे०॥ महापातकजान्घोरान्नरकान्प्राप्यदारुणान्॥तेसर्व्वे०॥ महाप्रेतमहाभागाप्रेतपूर्वा
चसंस्थिताः तेसर्व्वे०॥ अगम्यागमनंचैवव्रतभंगकराश्चये०॥तेसर्व्वे०॥जलाग्निभिर्मृतायेचअघोराधर्म्मवर्ज्जिताः॥तेस
र्व्वेतृप्तिगच्छंतुतिलपिंडंददाम्यहम्॥इतिश्राद्धविधिः॥ अथतिलपुष्पकुशतर्पणम्॥ ततःसव्येनाचम्यनीयपूर्वाभिमुखकुश
यवजलान्यादाय॥ ब्रह्माद्यादेवताःसर्व्वाःऋषयोमुनयस्तथा॥तेसर्व्वेतृप्तिमायांतुतिलपुष्पैःसुतर्पिताः॥असुरादेवप
त्यश्चमानरक्षांदिकास्तथा॥ दिक्पालालोकपालाश्चगृहदेवाधिदेवताः तेसर्व्वेतृप्तिमायांतुतिलपुष्पैःसुतर्पिताः॥विश्वे
देवास्तथादित्याःसाध्याश्चैवमरुद्गणाः॥तेसर्व्वेतृ०॥ क्षेत्रपीठोपपीठादिनदानद्यश्चसागराः॥तेसर्व्वेतृ०॥ पातालेना

प्रे.मं. ति तिलपुञ्जेषु तर्पिताः ॥ इति तिलश्राद्धतर्पणरुद्रधरप्रेततरंगौ ॥ ॐ ॥ अथ पक्षान्तरे षट्पुरुषतर्पणं ॥ ततोऽपसव्ये
१७ न जलतिलयुतं ताम्रपात्रस्थजलेन वृषभं वत्सरीसहितं पुच्छमेकीकृत्य द्विगुणकुशत्रयमादाय पित्रादिभ्यः पितृतीर्थे
न पौराणिकमन्त्रस्य मुदीरयाञ्जलित्रयेणानेन मन्त्रेण तर्पयेत् ॥ स्वधा पितृभ्यो मातृभ्यो वधूभ्यश्चापि तृप्तये ॥ मातृप-
क्षाश्च ये केचिद्ये चान्ये पितृपक्षकाः ॥ गुरुश्वशुरबंधूनां ये कुलेषु समुद्भवाः ॥ ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः
वृषोत्सर्गेण ते सर्वे लभंतां तृप्तिमुत्तमां ॥ इत्यादनेन मंत्रेण तिलाक्षतयुतं जलं ॥ ततोऽमुकगोत्रस्यामुकप्रेतस्य प्रेतत्ववि
मुक्तिकोऽसौ एष वत्सगोपुच्छोदकाञ्जलिर्मया दीयते तेनोपतिष्ठतां ॥ इत्युक्त्वामुकप्रेतस्य प्रेतत्वविमुक्तये वृषोऽयं मयोत्सृ-
ष्टः इति संकल्पजलं भूमौ निक्षिपेदित्यंजलित्रयं दत्वा सव्येनाचम्य ॥ ततो वत्सरीसहितं वृषभं पुनः संपूज्य ॥ ब्रह्मा त्वं ।
वृषरूपेण शिवमस्त्वजरस्तथा ॥ धर्मो वै वृषरूपेण प्रेतं वै तारयाशुभादिति वृषभं नत्वा च ॥ ततो वत्सस्य करणे उपान्तश्रा
वयेत् ॥ गोसहस्रस्य मध्ये तु क्रीडां कृत्वा समाहितः ॥ तथा वत्सर्य्यः कर्णे श्रावयेत् ॥ अमुकाय शाश्वतं मोक्षं देहि नाथ सुखं न- राम.
य ॥ ततो वारिधारया क्षीरेण च पंचाग्निप्रदक्षिणां कृत्वा ईशान्यां दिशि चालयेत् ॥ ततो वत्सरीसह वृषभं त्यजेत् ॥ अद्यति १७
थौ वृषोत्सर्गप्रतिष्ठासंसिद्ध्यर्थं ब्राह्मणाय होत्रे च दक्षिणादानमहत्सृजेत् ॥ ततो लोहकारस्य वेदनं दत्वा ॥ अथ वैतर

विरूपा आमगर्भाश्च ज्ञाताज्ञातकुले मम आमगर्भाश्च ये केचिद्दागताः पुरुगोचरे ॥ ते सर्वे० ॥ वृषयोनिगता ये च की
टकाश्च पतंगकाः ॥ ते सर्वे० ॥ नरके रौरवे जाता कुंभीपाके च ये गताः ॥ ते सर्वे० ॥ तप्ततैले च संसीयंते यमलोके महाभये ॥ ते स
र्वे० ॥ किंकरैः पीड्यते ये च मुद्गराभिस्तु कांडवत् ॥ ते सर्वे० ॥ जलेन पीडिता कूपयमदूतैर्महाबलैः ॥ ते सर्वे० ॥ यंत्रमध्ये
प्रपीड्यंते प्रेतपीडाव्यवस्थिताः कुष्ठापस्मारलूता दिजलोदरभगंदरैः ॥ ते सर्वे० ॥ गंडमालापांडुरोगैः क्षयव्याधिमृता
श्च ये ॥ ते सर्वे० ॥ कालग्राहैर्मृता ये च सिंहव्याघ्रहताश्च ये ॥ ते सर्वे० ॥ चांडालैर्निहता मार्गे अशौचशयने मृताः ते सर्वे० ॥
ब्रह्मस्वहारिणा ये च सुरापाः स्वर्णहारिणः ॥ ते सर्वे० ॥ कुब्जाश्च बधिरा ये च पितृमातृकुलोद्भवाः ॥ ते सर्वे० ॥ संसाररहिता ये
च वैरवादिषु ये गताः ॥ ते सर्वे० ॥ सर्पयोनिगता ये च तृणगुल्मलतास्थिताः ॥ ते सर्वे० ॥ देवत्वं मानुषत्वं च तिर्यक्प्रेतपिशा
चकाः ते सर्वे तृप्तिमायांतु निलपुच्छेषु तर्पिताः ॥ कृमिकीटपतंगेषु गता ये न स्वकर्मणाः ॥ ते सर्वे० ॥ पश्वादियोनिये
जाता वृश्चिकादिषु ये गताः ॥ आसुरीयोनिसमुत्पन्ना पिशाचत्वं च ये गताः ॥ ते सर्वे० ॥ उद्बंधनरके जाता ऊर्ध्ववृक्षे स्थिता
श्च ये ॥ ते सर्वे० ॥ महापातकजान्घोरान्नरकान्प्राप्य दारुणान् ॥ ते सर्वे० ॥ महाप्रेत महाभागा प्रेत पूर्वं च ये स्थिताः ॥ ते
सर्वे० ॥ अगम्यागमनं चैव व्रतभंगकराश्च ये ॥ ते सर्वे० ॥ जलाग्निभिर्मृता ये च अघोराः धर्मवर्ज्जिताः ॥ ते सर्वे तृप्तिमायां

प्रे.मं. कुशं गोपुच्छं गृहीत्वा संकल्पयेत्॥ अद्येत्याद्याशौचांतद्वितीयेऽह्नि अमुकगोत्रस्यामुकप्रेतस्याक्षयस्वर्गाद्युत्तमलोकप्रा
१८ प्तिकामः इमां कपिलां गां सवत्सां स्वर्णशृंगीं रौप्यखुरीं ताम्रपृष्ठीं कांस्योपदोहनीं मुक्तालांगूलभूषितां घंटाचामरयुतां वस्त्र
द्वयोपेतां इमां गां रुद्रदैवतां यथालंकारैः रलंकृतां यथानामगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे॥ ततो गोः प्रेय
जमानः पृष्ठेनौकां गोपुच्छं गृहीत्वा ईशानद्वारेण पारं गच्छेत्॥ कृतैतत्कपिलादानप्रतिष्ठासंसिद्ध्यर्थं सुवर्णं दक्षिणां दद्या
त्॥ पृथ्वी द्रोणशिखरे सप्तधान्यसमन्वितं सकार्यां संचरेयम्॥ सतत्सर्वं यद्दत्तं तेन विष्णुः प्रसीदः॥ ततः सचैलस्नानं कृ
त्वा वस्त्रं त्यजेत्॥ इति वृषोत्सर्गः॥ अथोदकुंभदानम्॥ अर्वाक् सपिंडीकरणं यस्य संवत्सराद्भवेत्॥ तस्याप्यन्नं सोदकुंभं
दद्यात्संवत्सरं द्विजे॥ ततो द्वादशसोदकुंभदानम्॥ अपसव्येन दक्षिणाभिमुखः पातितवामजानुः॥ अद्येत्याद्यमुका
गोत्रामुकप्रेतोऽयं सान्नोदकद्वादशकुंभो मया दीयते तेन तवोपतिष्ठताम्॥ अथैकादशाहश्राद्धेतिकर्तव्यता॥ ततः श्राद्धारंभः॥
पूर्वमेव ब्राह्मणं निमंत्र्य॥ उक्तं च वाराहपुराणे॥ अस्तंगते सदा दित्ये गत्वा विप्रं निवेशयेत्॥ दत्वा पाद्यं तु विधिवन्नमस्कृ राम.
त्य द्विजोत्तमं॥ १॥ पादौ प्रक्षाल्य तैलेन प्रेतस्य हितकाम्यया॥ प्रभातमुपतिष्ठेयमुदितं च दिवाकरे॥ तैलाभ्यंगमतः कृत्वा १८
नद्यादौ स्नानमाचरेत्॥ आदिशब्देन तडागे वा स्नानं कारयेत्॥ श्राद्धसमीपे द्विजमाहूय॥ स्वयं दक्षिणाभिमुखः॥ अप

रण्यां सोपकरणयुतां कपिलां दद्यात्॥ तदलाभे गां च दद्यात्॥ ततः पुष्पाक्षतैस्तां गां संपूज्य॥ प्रथमं गोग्राहकस्य वरणं
सोपकरणगव्यैर्नमः॥ ब्राह्मणाय नमः इति संपूज्य॥ नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च॥ नमो ब्रह्मसुता-
भ्यश्च पवित्राभ्यो नमो नमः। अर्चितासि वशिष्ठेन विश्वामित्रेण पूजिता॥ सुरभी हर मे पापं यन्मया दुःकृतं कृतम्॥ अने-
न मंत्रेण कपिलां सवत्सां संपूज्य॥ इममुच्चारयेन्मंत्रं संगृह्य सजलान्कुशान्॥ यमद्वारे महाघोरे श्रुत्वा वैतरणीं न-
दीम्॥ तर्तुकामो ददाम्येतां तुभ्यं वैतरणीं नमः॥ गावो मे चाग्रतः संतु गावो मे संतु पृष्ठतः॥ गावो मे हृदये संतु गवां मध्ये
वसाम्यहं॥ विष्णुरूप द्विजश्रेष्ठ मामुद्धर महीसुर॥ सदक्षिणा मया दत्ता तुभ्यं वैतरणीं नमः॥ धर्मराजं च सर्वां-
श्च वैतरण्याख्यधेनुकं॥ सर्वं प्रदक्षिणीकृत्य ब्राह्मणाय निवेदयेत्॥ पुच्छं संगृह्य धेन्वाश्च अग्रे कृत्वा तु वै द्विजं॥ धेनु-
के त्वं प्रतीक्षस्व यमद्वारे महाभये॥ उत्तारणार्थं देवेशि वैतरण्यै नमोऽस्तु ते॥ अनुव्रजेत्तु गच्छंतं सर्वमिति पठित्वा॥ कपिला-
पूजनप्रार्थनानंतरं इक्षुदंडमयं सुदृढं लोहदंडसमन्वितं॥ हेममयं यज्ञपुरुषं॥ एतत्सर्वं वैतरणीसमीपे कृत्वा॥ ततो वैतरणी-
नैर्ऋत्यकोणे नौकामाहूय तत्रोपरि कार्पाससंयुतां सलवणं घृतखांडं तत्रोपरि यज्ञपुरुषं स्थापयेत् संकल्पयित्वा उत्तारये-
त्॥ अद्येत्यादि अमुकगोत्रस्यामुकप्रेतस्य वैतरण्युत्तारणार्थं श्रीयज्ञपुरुषं स्थाप्रणाहि॥ ततो यवतिलजलान्यादाय स

प्रे.मं. निवीवंधनं ॥ ततोऽपसव्येनासनं दद्यात् ॥ अद्याशौचांतद्वितीयेऽन्हि अमुकगोत्रामुकप्रेतेनेदं कौशमासनं मद्दत्तमस्तु वो
१९ पतिष्ठताम् ॥ अथ हस्तार्घपात्रं ॥ कूर्मपात्रजलेन गंधपुष्पपवित्रान्वितं तिलजलैर्हस्तार्घमापूर्य ॥ पवित्रं द्विजकरे दत्वा
ॐ पार्थिव्या आपः पयसा संबभूवुर्या अंतरिक्षादुत पार्थिवीर्या हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः सं स्योना सुहवा
भवंतु इति पठित्वा ॥ अद्याशौचांतद्वितीयेऽन्हि अमुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्तिपूर्वकाक्षय्यस्वर्गाद्युत्तमलो
कप्राप्तिकामः एष हस्तार्घो मया दीयते तेन वोपतिष्ठतामिति स्वर्घं दत्वा ॥ अर्घपात्रं द्विजवामभागे निधाय प्रेतायस्वस्थानमसी
ति न्युब्जि कुर्यात् ॥ तदुपरि कुशत्रयं निदध्यात् ॥ ततो ब्राह्मणपादौ प्रक्षाल्य गंधपुष्पाक्षतधूपादिभिः संपूज्य ॥ अद्येहा
मुकगोत्रामुकप्रेत अर्चनविधावेतानि गंधाक्षतपुष्पधूपदीपोपसूत्रताम्बूलयज्ञोपवीताच्छादनानि मया दीयंते तेन वोप
तिष्ठताम् ॥ ततः प्रेतभुक्तवस्त्रपात्रछत्रोपानहकांस्यादिकं च दद्यात् । ततः सव्येनाचम्य ततो गंधाक्षतेन छत्रं संपूज्य ॥ छ
त्राय नमः इति पूजयेत् ॥ ब्राह्मणाय नमः छत्रं ददामीति द्विजकरे जलदानं । अद्येत्यादि अमुकगोत्रस्यामुकप्रेतस्य प्रेतत्व राम.
विमुक्तिपूर्वकाक्षय्यस्वर्गाद्युत्तमलोकप्राप्तिकामः यममार्गे घोरातपघर्मनिवारणार्थमिदं छत्रमुत्तानांगिरसदैवतममु १९
कगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ॥ स्वस्तीति प्रतिवचनं ॥ छत्रदानप्रतिष्ठार्थं दक्षिणां हिरण्यमग्निदै

सव्यमासनेउपविश्य॥ द्विजासनसमीपेश्राद्धसमाप्तिपर्य्यंतंतिलतैलेनघृतेनवाप्रज्वालितंदीपंस्थापयेत्॥ प्राणायाम
विष्णुस्मरणंचविधाय॥ अपसव्येनजवकुशजलान्यादायप्रतिज्ञांकुर्य्यात्॥ अद्येत्यादिअमुकगोत्रस्यामुकप्रेतस्यप्रे
तत्वविमुक्तिपूर्वकाक्षयस्वर्गाद्युत्तमलोकप्राप्तिकामः षोडशश्राद्धान्तर्गतैकादशाहैकोद्दिष्टश्राद्धमेभिरुपनीतद्रव्यैरहं
करिष्ये॥ इतिसंकल्पः॥ ततःकर्मपात्रमहंकरिष्ये ॐ कुरुष्वेत्यनुज्ञातः॥ कर्मपात्रस्यासनं॥ आसनेपात्रं·पात्रेजलं
शन्नोदेवीति·पवित्रस्थेतिकुशं· यवोसितियवं·याःफलितिपूगीफलं·श्रीश्चतेतितुलसीदलं·गंधद्वारेतिचंदनं· ततोऽप
सव्यं॥ तिलोसीतितिलदानं·ततःसव्यं॥ गंगेचयमुनेचैतितीर्थमावाह्य॥ तज्जलैःसकुशैःश्राद्धद्रव्याणिभूमिमात्मानंचा
भिषिंचेत्॥ अपवित्रःपवित्रोवेतिमंत्रेण॥ गायत्रींजपेत्॥ देवताभ्यश्चेतिपठित्वा॥ ततोऽपसव्येनदिग्बंधनंकुर्य्यात्॥ ति
लयवकुशान्वामकरेधृत्वादक्षिणहस्तेनदिशंप्रतिप्रक्षिपेत्॥ अग्निष्वात्ताःपितृगणाःप्राचीरक्षंतुमेदिशं अपहतासुरार
क्षाॐशिवेदिषदः॥ तथाबर्हिषदःपांतुयाम्यांयेपितरःस्थिताः अपहतासुरारक्षाॐशिवेदिषदः॥ प्रतीचीमाज्यपपांतु
अपहतासुरारक्षाॐशिवेदिषदः॥ उदीचीसोमपामपाःअपहतासुरारक्षाॐशिवेदिषदः॥ ऊर्ध्वंपांतुमरुद्गणाःअपहता
सुरारक्षाॐशिवेदिषदः॥ विश्वेदेवाअधःपांतुअपहतासुरारक्षाॐशिवेदिषदः॥ ततःसव्येन॥ रक्षोभूतपिशाचेभ्येति

भाजनंभोजनभाजनान्नंपरिवेष्य॥ कांस्यपात्रताम्रपात्रपित्तलपात्रादिकंचदद्यात् ततस्सव्येनगन्धादिनाब्राह्मणमे-
भ्यर्च्य॥अद्याशौचान्तर्द्वितीयेऽह्नि अमुकगोत्रामुकप्रेतइदमर्चनादिकंमयादीयतेतवोपतिष्ठताम्॥ द्विगुणभग्नकुशज-
लैर्दद्यात॥ ततोऽपसव्यंदक्षिणामुखः पातितवामजानुः॥ अपहतासुरारक्षांसिवेदिषदः इतिवामावर्ते तिलान्विकी-
र्य॥अद्यामुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्तिकामस्यैकादशाहश्राद्धे एतानिजलक्षीरदधिघृततण्डुलसर्षपकुशान्
— पुष्पाणितेमयादीयन्तेतवोपतिष्ठताम्॥ एतच्छ्राधिकफलमंत्रः॥ इहलोकंपरित्यज्यगतोसिपरमांगतिम्॥ अमुक
गोत्रस्यामुकप्रेतस्यैकादशाहश्राद्धे एतानिगंधाक्षतपुष्पधूपदीपनैवेद्यताम्बूलयज्ञोपवीताच्छादनानितेमयादीयन्ते
तवोपतिष्ठताम्॥ततःसव्येनाचम्य भस्मविधायान्नंब्राह्मणस्यदेयं॥ ततः पात्रावलीतिक्तमधुराम्लान्नव्यंजनादिहवि-
ष्यान्नंमधुमयंपूर्णंकृत्वाव्यस्तपाणिरालभ्य॥ ॐ पृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेअमृतेअमृतंजुहोमिस्वा-
हा॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम्समूढमस्यपांसुरेस्वाहा॥ इतिजपन्विचिंत्यब्राह्मणांगुष्ठंगृहीत्वा॥ ततोऽपस- राम.
व्यम्॥ इदमन्नंइमाआपःइदमाज्यंइदंहविःएतत्सर्वंअपहतासुरारक्षांसिवेदिषदः॥ अद्यामुकगोत्रस्यामुकप्रेतस्यै- २०
कादशाहश्राद्धेइदमन्नंसोपकरणंयथोपस्करसहितंनिषिद्धवर्जितंब्राह्मणतृप्तियोग्यमुपनीतोपनेष्यमानंतेमयादी-

वतंअमुकगोत्रायामुकशर्म्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ ब्राह्मणहस्तेछत्रदंडेनधारयेत् ॥ उपानद्दानं ॥ उपानद्भ्यां
नमः ॥ ब्राह्मणायनमःइत्युपानहौसंपूज्य ॥ पूजानंतरंउपानहौददामीति द्विजकरेजलदानं ॥ अद्यामुकगोत्रस्यामुकप्रेत
स्योत्क्रावन्त्यखरतरकिरणसंतप्तबालुकाभिरसिप त्रवनोपकंटकितरणदुर्गभूमिसंतरणकामः ॥ इमेउपानहौउत्तानां
गिरसदैवतेप्रेतोहितकामनयाअमुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ स्वस्तीति ॥ अद्यकृतैतदुपानद्
नप्रतिष्ठा संसिद्ध्यर्थंदक्षिणांहिरण्यमग्निदैवतं अमुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ स्वस्तीति ॥
अश्वायनमः ॥ ब्राह्मणायनमइत्यश्वमुसंपूज्य ॥ अद्यामुकगोत्रस्यामुकप्रेतस्योत्क्रावन्त्यदुर्गभूमिसंतरणकामः अमुम
श्वंसूर्यदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ स्वस्तीति ॥ अद्यकृतैतदश्वदानप्रतिष्ठासंसिद्ध्यर्थं
मित्यादि ॥ अन्यदपिप्रेतभुक्तवस्त्रालंकारादिकांस्यपात्रादिकंप्रेतश्राद्धभोक्त्रे निवेदयेत् ॥ तथाचवृद्ध स्मृतिः ॥ शय्यालं
कारवस्त्राद्यंपितुर्यद्वाहनायुधम् ॥ गंधमाल्यैःसमभ्यर्च्यश्राद्धभोक्त्रेप्रदापयेत् ॥ अथवर्षासनंदद्यात् ॥ अद्येत्यादिअ
मुकगोत्रामुकप्रेतअद्यारभ्यमरणदिनपर्यंतंदशदिवसन्यूनसंवत्सरभोग्यान्नपानादिव्यंजनतांबूलतन्मूल्योकल्पि
तंइदंयंवावर्षासनत्वेनयथानामगोत्रायब्राह्मणायदातुमहमुत्सृजेत् ॥ दक्षिणाच ॥ ततःप्रेतोद्देशेनान्नदेयं ॥ ततअवम

·मे· सहितान्नंएकीकृतबिल्वोपमंपिंडंनिर्माय॥ अद्यामुकगोत्रामुकप्रेतएकादशाहश्राद्धेएषः पिंडस्तेमयादीयतेतेन
२९ वोपतिष्ठताम्॥ आस्तृतदर्भमूलेनकरंप्रोक्ष्य॥ सव्यंकृत्वाचम्य· हरिंस्मृत्वा·ततोपसव्यं॥ जलास्तृतंस्पृष्ट्वा अत्रप्रेतमाद
यध्वं·इतिपठित्वा·उदङ्मुखीभूयमनाकृत्वासंनियम्य·प्रेतंभास्वरमूर्तिंध्यायेदमीमदंतेतिपठित्वापिंडोपरिजलास्तृतंसि
ञ्चा॥ अद्यामुकगोत्रामुकप्रेतइदंप्रत्यवनेजनजलंतेमयादीयतेतवोपतिष्ठताम्॥ नीवीविस्रमयेत्॥ एतत्तेप्रेतवासः॥
पिंडार्चनंकारयेत्॥ नमोवःप्रेतरसायेतिपिंडोपरिसूत्रंदद्यात्॥ ततस्तूष्णींगंधाक्षतपुष्पधूपदीपनैवेद्यतांबूलादिकं॥
पिंडोपरिदद्यात्॥ अद्यशौचांतद्वितीयेऽह्निअमुकगोत्रामुकप्रेतएतानिगंधाक्षतपुष्पधूपदीपादीनितेमयादीयतेतव॥
वोपतिष्ठताम्॥ ततोब्राह्मणकरेजलदानं॥ अपांमध्येस्थितादेवा· सर्वमप्सुप्रतिष्ठितं॥ ब्राह्मणस्यकरेन्यस्ताः शिवाआ
पोभवन्तुते॥ लक्ष्मीर्वसतिपुष्पेष्वित्यादिपठित्वा·सदास्तुतेनोक्ते॥ ततोऽक्षय्योदकंच॥ अद्याशौचांतद्वितीयेऽह्नि अमुक
गोत्रस्यामुकप्रेतस्यैकादशाहश्राद्धीयदत्तैतदन्नपानादिकंतदक्षय्यमस्तुतेमयादीयतेतवोपतिष्ठताम्॥ ततोऽन्नंदद्या राम·
त्॥ अन्नंवहंतीतिमंत्रेण॥ ततोनम्रीभूयपिंडमुत्थाप्य॥ ततःसव्येनवेदिकायांशंखचक्रमुल्लिख्यतत्पूजनंचकुर्यात्॥ वसं २९
तादिषट्ऋतून्पूजयेन्नमस्करोति॥ पिंडाधारान्कुशान्तुस्पृकंचवह्नौक्षिपेत्॥ अर्घपात्रमुत्तानंकृत्वादक्षिणांदद्यात्

यत्नेनवोपतिष्ठताम्॥ ततइदमापोशानंतेमयादीयत्नेनवोपतिष्ठताम्॥ यथासुखञ्चेतिब्रूयात्॥ ततोगायत्रींमधुवाताऽइ
त्यादिऋचस्तांजपेत्॥ अंगहीनंक्रियाहीनंविधिहीनंचयद्भवेत्॥ तत्सर्वमच्छिद्रमस्तुहरेर्नामानुकीर्तनात्॥ यथाश्रुतंजुष
स्वेत्युक्ते॥ श्राद्धकर्त्ताचदर्भेष्वासीनः॥ तत्रप्रत्यक्षेणोपलभ्यते तदुपनयनंमंदंमंदंचभोजयेत्॥ ततस्तांस्तृप्तान्ज्ञात्वाउ
च्छिष्टसन्निधौ आस्तृतदक्षिणाग्रकुशत्रयंभूमौस्थापयेत्॥ ततोऽपसव्येनविकरदानंचेति नैवेद्यान्नंदद्यादितिके
चित्॥ बहूनांसंमतंस्थानेयथाकात्यायनः॥ विकरस्तुत्रिशब्दस्यशर्मआमविसर्जनं॥ स्वधास्थःप्रणवोजाप्यंप्रेत
श्राद्धेविवर्जयेत्॥ इतिप्रथमषोडशेनिषेधः॥ नोद्वितीयादौ॥ ततःसव्यंकृत्वाचस्यहरिंस्मृत्वा॥ ततोऽपसव्यंकृत्वा
ब्राह्मणायजलगंडूषंदत्वास्वदितिब्राह्मणंपृच्छेत् स्वदितमितिते—नोक्तं॥ पिंडदानमहंकरिष्ये॥ कुरुष्व॥ उच्छिष्टसन्नि
धौदर्तार्धपरिमितांवेदींदक्षिणप्लवंचतुरंगुलमुच्छ्रितांनिर्माय॥ वामहस्तेकुशंगृहीत्वाअपहतासुरारक्षांसि वेदि
षदः इतिवेदिकास्थानेरेखांकृत्वा रेखोपरियेरूपाणीतिमंत्रेणोल्मुकंभ्रामयित्वारेखादक्षिणतोनिदध्यात्॥ छिन्नमूलकु
शास्तरणंसव्येनदेवताभ्यइतिजपः॥ ततोऽपसव्यं॥ अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्तिपूर्वकाक्षय्यएकादशाह
श्राद्धइदंपिंडासनमवनेजनजलंतेस्वधनेमयादीयत्नेनवोपतिष्ठताम्॥ अत्रश्राद्धशेषान्नंउस्तंसर्वंव्यंजनतिलजल

प्रे॰ सं॰ २२

ईद्यात् ॥ अथाशौचांतर्गतद्वितीयेऽन्हि अमुकगोत्रस्यामुकप्रेतस्याक्षय्यस्वर्गाद्युत्तमलोकवासकामनया आह्निकप
र्यंतमिदं साधिकशतत्रयकौशिकांघटैकसहितजलतिलाक्षतैर्युतं महोपशांत्यर्थं ते मया दीयते नतवोपतिष्ठतां ॥ ततो
यथाशक्ति दक्षिणां दद्यात् ॥ इति एकादशाहविधिः समाप्तः ॥ ॰:॰ ॥ अथ मासिकप्रयोगः सपिंडीकरणं ॥ एवं प्र
थममासिकत्रिपाक्षिकद्विमासिक त्रिमासिकचतुर्मासिकपंचमासिकऊनषाण्मासिकषाण्मासिकसप्तमासिकअ
ष्टमासिक·नवमासिक·दशमासिक·एकादशमासिक·ऊनाब्दिक·आब्दिक·इत्येतानि द्वादशाहपूर्वकमब्दिकप
र्यंतानि षोडशश्राद्धानि पूर्वोक्तविधिना कुर्यादेकोद्दिष्टवत् ॥ तथा च देवलः ॥ द्वादशप्रतिमासानि साद्यानि द्वादशाहे स-
माचरेत् ॥ त्रिपाक्षिकं च कर्तव्यं ऊनषाण्मासिकं तथा ॥१॥ षाण्मासिकमाब्दिकं च ऊनाब्दिकमथापि वा ॥ सपिंडी
करणं चेति प्रेतश्राद्धानि षोडश ॥२॥ यद्येकस्मिन्नहनि द्वादशप्रतिमासकल्पना तदेवं वाक्यं ॥ अमुकगोत्रस्या
मुकप्रेतस्यैकोद्दिष्टश्राद्धमहं करिष्ये ॥ एकोद्दिष्टवत्कर्तव्यं ॥ तथा च याज्ञवल्क्यः ॥ एकोद्दिष्टं दैवहीनमेकार्घैक या॰
पवित्रकं ॥ आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥१॥ अथ प्रथममासिकश्राद्धं ॥ तत्र श्राद्धदिने निरामिषमे- २
कवारं भुक्त्वा रात्रौ गृहं गोमयोदकेनोपलिप्य दक्षिणप्रवणभूमौ ब्राह्मणमुदङ्मुखमुपवेश्य कृतापसव्यो दक्षिणाभि

अद्यामुकगोत्रायामुकप्रेतस्य कृतैतदेकादशाहश्राद्धप्रतिष्ठार्थं दक्षिणां रजतं चंद्रदैवतं अमुकगोत्रायामुकशर्मणे ब्राह्मणा
य — दक्षिणां तुभ्यमहं संप्रददे ॥ स्वस्तीति ॥ ततः श्राद्धकर्ता द्विजवरणो संपाद्य द्विजनमस्कारं कुर्यात् ॥ द्विजं विसृज्य जलपात्रं
गृहीत्वा ॥ वाजे वाजे इति प्रदक्षिणीकृत्य ॥ आमा वाजस्येति विसर्जनं ॥ अष्टौ पदान्यनुव्रज्य प्रदक्षिणीकृत्याभिधाय प्र
णम्य ॥ देवताभ्यः पितृभ्यश्चेति पठित्वा ॥ पाणिना श्राद्धीयदीपनिर्वापनं ॥ पाणिद्वयं प्रक्षाल्याचम्य ॥ ततो द्विजभोजनांते श
य्याभ्य मुहूर्तं विश्रमेत् ॥ सकलालंकारैरलंकृतं ॥ मंडपान्संकल्पयित्वा ॥ गृहं प्रविशेत् ॥ क्षत्रियस्त्वशौचांतदिने रौप्यं
स्वर्णमहार्हाणि रत्नानि गां वाहनानी दासीं दासांश्च सुमहान्ति वेश्मानि श्रेष्ठभूषणानि प्रेतमुद्दिश्य गोभूहिरण्यादिकं
दद्यात् ॥ पूर्वोक्तवाक्येन ॥ अथ दानविधिः ॥ दंते गजं चापि तुरंगाकेशे गां चापि पुच्छे मेहिषीं तु शृंगे ॥ अथाविकां च स्तन
नाभिमध्ये उष्ट्रं गले श्वापि वृषं च अंसैः ॥ खड्गं तु चाग्रे स्तवचक्रमध्ये केशे तु दासीं हृदयेन पत्नीं दानस्य मोक्षाविधियुक्तिरे
षा विहस्तजने नैव समुक्तिकेन ॥ ब्राह्मणेभ्योऽन्यदपि प्रेतमुद्दिश्य दद्यात् ॥ तत उदकुंभदानं ॥ कृतापसव्यो दक्षिणाभिमु
खः पातितवामजानुः ॥ अद्यामुकगोत्रपितरमुकप्रेत इदमासनं ते मया दीयते तवोपतिष्ठतां ॥ अद्यामुकगोत्रामुकप्रेत एष प्र
शांतोदकुंभस्ते मया दीयते तवोपतिष्ठतां ॥ पाठांतरेपि ॥ दशादशाहिकश्राद्धशतत्रयकोशिकाभिः सोदकुंभैस्तिलयुतै

प्रे.मं. स्यामुकप्रेतस्यप्रेतत्वविमुक्तिपूर्वकाक्षयप्रथममासिकश्राद्धे इदमासनंते मयादीयतेतवोपतिष्ठताम्॥ पूर्ववत्कल्पि
२३ तासनं दत्वा आयंतुनः पितरः इतिपठित्वा॥ हस्तार्घपात्रपुटकेनादाय॥ शन्नोदेवीरभीष्टयाआपोभवंतुपीतयेसंयोरभिः
स्रवंतुन इतिजलं॥ तिलोसिसोमदेवोसिगोसवोदेवनिर्मितः॥ प्रत्नमद्भिःपृक्तः स्वधयापितॄन् लोकान्प्रीणाहिनःस्वधा
इतितिलान्॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तं इष्टंमनीषाणामुमइषाणा सर्वलोकं
मविषाणां इतिपुष्पाक्षतं॥ गंधद्वारांदुराधर्षामितिगंधं॥ वामहस्तेनार्घपात्रमादाय·संपन्नंसुसंपन्नमस्तु॥ सपवित्रकं
विप्रकरे दत्वा· नमोनारायणायेति· पादिव्याआपः पयसासंबभूवुर्यान्तरीक्षाउतपार्थिवीर्याः हिरण्यवर्णायज्ञियास्तान
आपः शिवः सं ँ स्योनासुहवाभवंत्वितिपठित्वा॥ अद्यामुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्तिपूर्वकाक्षयस्वर्गाद्युत्त
मलोकप्राप्तिकामः द्वादशाहे षोडशश्राद्धांतर्गतप्रथममासिकश्राद्धे एषहस्तार्घस्तेमयादीयतेतवोपतिष्ठतां॥ ब्रा
ह्मणवामप्रदेशेप्रेतस्थानमसि इत्यधोमुखसपवित्रकं स्थापयेत॥ दक्षिणापर्यंतंनचालयेत्॥ अद्यामुकगोत्रामुक राम.
प्रेतप्रथममासिकश्राद्धे एतानिदधिक्षीरघृततंडुलसर्षपकुशपुष्पाणि तेमयादीयतेतवोपतिष्ठताम्॥ एतत्स्वाधिका २३
फलार्थमितिहस्तामुखः॥ ॥वस्त्रगंधाक्षतधूपदीपादिकं दत्वासंकल्पयेत्॥ अद्यामुकगोत्रामुकप्रेतप्रथममासि

मुखः पातितवामजानुस्तान्मूलतिलकुशान्यादाय ॥ अस्यां रात्रौ अमुकगोत्रामुकप्रेतस्य ःकर्त्तव्यषोडशश्राद्धांतर्गत
द्वादशाहे प्रथममासिकश्राद्धे भवतं ब्राह्मणमामंत्रये ॥ आमंत्रितोस्मि ॥ अक्रोधनैरितिपठेत् ॥ तथास्त्विति तेनोक्ते ॥ त
तः प्रातर्दन्तधावनादिकं सर्वं कृत्वा ॥ ताम्रपात्रस्थं तिलोद्वर्त्तनं कृत्वा समध्यान्हे सुजले स्नातः शुचिर्भूत्वा शुक्लदिवासः ॥
गोमयोपलिप्तायां भूमौ पृथ्व्यास्तृतदर्भेषु तिष्ठन् ॥ सुस्वागतमिति पृच्छेत् ॥ सुस्वागतमिति तेनोक्ते ॥ ममाद्य दासायं
नभवेति तदा प्रातरेव कर्त्तव्यमामंत्रणं ॥ पादार्घं दद्यात् ॥ अद्यामुकगोत्रामुकप्रेतप्रथममासिकश्राद्धे एष पादार्घ्यस्ते
मयादीयते तेनचोपतिष्ठताम् ॥ तत्पादयोस्तले दक्षिणाग्रान्कुशान्दद्यात् ॥ आसनसमीपे तिलतैलेन दीपं प्रज्वाल्य श्राद्धस
माप्तिपर्यंतं दद्यात् ॥ सव्येनाचम्य ॥ ॐ हरिः पुनातु ॐ विष्णुः पुनातु ॐ पुंडरीकाक्षः —— पुनात्विति श्लोकः ॥ अपस
व्येन प्रतिज्ञां कुर्यात् ॥ त्रीन्कुशानादाय ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्तिकामस्य स्वर्गाच्युतलोकप्राप्ति
कामः द्वादशाहे षोडशश्राद्धांतर्गतप्रथममासिकश्राद्धमहं करिष्ये इति सर्वत्र वाक्यं ॥ द्वादशमासाभ्यंतरे ऽधिकमासे
षोडशपदस्थाने सप्तदशप्रयोज्यं ॥ सव्येनाचम्य ॥ गायत्रीं जप्त्वा ॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ॥ नमः स्वाहा
यै स्वधायै च नित्यमेव नमो नमः ॥ सव्येन कर्मपात्रकरणं ॥ ततोपसव्येन दिग्बंधनं ॥ कुशान्तिलान्गृहीत्वा अद्यामुकगोत्र

हेअग्निमेवच॥ नैर्ऋत्ये पार्वणे श्राद्धे प्रेतश्राद्धे तु दक्षिणे॥९॥ ततः सव्यं कृत्वाचम्य ब्राह्मणाय गंडूषजलं दद्यात्॥ ततोऽ
पसव्यं॥ दक्षिणाभिमुखः ब्राह्मणं स्वदितमिति पृच्छेत्॥ सुस्वदितमिति तेनोक्ते॥ पिंडमहं करिष्ये कुरुष्वेत्यनुज्ञातः उच्छिष्टसं-
न्निधौ चतुरस्त्रां हस्तमात्रां दक्षिणप्रवणां चतुरंगुलोच्छ्रितां वेदीं निर्माय वामदक्षिणहस्तगृहीतकुशेन अपहतेति
रेखाकरणं॥ ये रूपाणि प्रतिमुंचमाना असुराः संतः स्वधया चरंति॥ निज्वलदंगारं भ्रामयित्वा रेखा दक्षिणतो निरस्यात्॥ अ
यो ध्यामस्तु रामायेति सिंचनं॥ तदुपरि छिन्नमूलकुशास्तरणं॥ सव्यं कृत्वाचम्य॥ देवताभ्यः पितृभ्यः श्चेति त्रिर्जपित्वा॥
ततोऽपसव्यं॥ पिंडासनं॥ अद्यामुकगोत्र पितरमुकप्रेत द्वादशाहे षोडशश्राद्धांतर्गतप्रथममासिकश्राद्धे इदं पिंडासनं अ
वनेजनजलं ते मया दीयते तवोपतिष्ठताम्॥ मध्वाज्यतिलसर्वव्यंजनसहितं पिंडं बिल्वोपमं निर्माय॥ अद्यामुकगोत्र
पितरमुकप्रेत द्वादशाहे षोडशश्राद्धांतर्गतप्रथममासिकश्राद्धे एष पिंडस्ते मया दीयते तवोपतिष्ठतां॥ आस्तृतदर्भे
मूलेन पिंडोपरि करप्रोक्षणं॥ सव्यं कृत्वाचम्य हरिं स्मरेत्॥ पुनरपसव्यं॥ अक्षतं गृहीत्वा उदङ्मुखो भूत्वा॥ प्रेतमाहाय॥ राम.
ध्वंद्वं निपतित्वा वामावर्तेन श्वासं नियम्य आवर्तमानः पितरं भास्वरमूर्तिं ध्यायेत्॥ अमीमदंत पितरोम्नतरोयथाभागमा २४
वृषाइषत् पिंडोपर्यक्षतं दद्यात्॥ अमुकगोत्रामुकप्रेत इदं पिंडमभ्यवनेजनजलं ते मया दीयते तवोपतिष्ठतां॥ निवी

कश्राद्धे एतानि गंधाक्षतपुष्पधूपदीपताम्बूलयज्ञोपवीताच्छादनानि नैमयादीयतेतवोपतिष्ठतां॥ गौरमृत्तिकामानीयचूर्णी
कृत्यजलेनाभ्युक्ष्यब्राह्मणंवेष्टयित्वामंडलंकुर्य्यात्॥ परकीयभूमौश्राद्धकरण पक्षेश्राद्धीयवस्तुषुकिंचित्सव्यंजनमन्न
माहाय॥इदमन्नंभूस्वामिपितृभ्योनमः॥ किंचिन्मूल्यंवादद्यात्॥ नानापदार्थसहितमन्नंपरिवेषयेत्॥उक्तमन्नंसज
तादिपात्रेणवेष्टयित्वाकराभ्यामादाय·मधुरसंमनसाचिंतितं· मांसादिव्यंजनादिपिष्टपात्रांतरेणआज्येक्षवतिलसहि
तंहविष्यान्नंमधुमयंकृत्वा॥ पृथिवीतेपात्रंद्यौरपिधानं·ब्राह्मणस्यमुखेअमृतंजुहोमिस्वधा॥इदंविष्णुरिति·कृष्णका
ष्ठमिदंरक्ष·ब्राह्मणांगुष्ठंगृहीत्वा·इदमन्नमिदमापःइदमाज्यमिदंमैक्षवमित्यादितिलान्विकीर्य्य·॥अद्यामुकगोत्र
पितरमुकप्रेतद्वादशाहेषोडशश्राद्धांतर्गतप्रथममासिकश्राद्धेइदमन्नंसोपकरणंसव्यंजनंनैमयादीयतेतवोपतिष्ठतां
॥पात्रमध्येउत्सृजेत्॥ पितृमंत्रान्पुरुषसूक्तंशिवसूक्तंचपठेत्॥ मधुवाताऋतायतेमधुक्षरंतिसिंधवः माध्वीर्नःसंत्वोष
धीःमधुनक्तमुतोषसोमधु— मत्पार्थिवꣳरजःमधुद्यौरस्तुनः पितामधुमान्नोवनस्पतिर्मधुमाꣳअस्तुसूर्य्यः मा
ध्वीर्गावोभवंतिनः मधुमधुमधुअन्नसंकल्पसिद्धिरस्तु॥ ब्राह्मणंमंदंमंदंभोजयेत्॥ ततस्तंतृप्तंज्ञात्वा·उच्छिष्टसंनिधौ
आस्तृतदक्षिणाग्रकुशा भूमिंप्रोक्ष्य॥ततोविकराशनेविकरादानंचकुर्य्यात्॥ तथाचस्मृतिः॥आभ्युदयिकेचपूर्वेद्युरा

ध्याघ्राय ॥ ततः सव्येन शंखादिलेखनपूजनं च ॥ अर्घपात्रमुत्तानीकृत्य ॥ ततोऽपसव्येन पिंड मुत्थाप्य वेद्यां स्थापयेत्
अनादिनिधनो देव शंखचक्रगदाधर ॥ अक्षय्यपुंडरीकाक्ष प्रेतमोक्षप्रदो भव इति मंत्रपाठः ॥ सव्येन दक्षिणा ॥ अद्या
मुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धप्रतिष्ठार्थमिदं रजतं चंद्रदैवतं तन्मूल्योपकल्पितं द्रव्यं वा अमुकगोत्राया
मुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ॥ स्वस्तीति ॥ कर्मपात्रजलं गृहीत्वा बहिःस्थितं वाजेवाजे इति विसर्ज्जनं ॥ अमा
वाजस्य प्रसवो जगम्या देमे· द्यावापृथिवी विश्वरूपे· आमागंतां पितरो मातरो चा मा सोमो अमृतत्वेन गम्यात् ॥ इति प्रदक्षिणी
कुर्वन्· त्रिधारिधारया ब्राह्मणं वेष्टयेत् ॥ सव्यं कृत्वाचम्य ॥ देवताभ्य इति त्रिर्जपित्वा ॥ ततः श्राद्धीयदीपनिर्वापनं ॥ पाणिद्वयं
प्रक्षाल्याचम्य ॥ गृहं प्रविशेत् ॥ इति लघुप्रक्रिया ॥ पद्धत्यंतरे लघुप्रकारमाह ॥ इत्येनानि द्वादशाहपूर्वकमाह्निकपर्य्यंता
नि षोडश श्राद्धानि पूर्वोक्तविधिना कुर्यादेकोद्दिष्टवत् ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्तिपूर्वकाक्षय्यस्वर्गाद्युत्त
मलोकप्राप्तिकामः द्वादशाहे षोडश श्राद्धांतर्गत प्रथममासिकश्राद्धमेभिर्द्रव्यैरहं करिष्ये ॥ सर्वमासिकेष्वेतदेव वाक्यं ॥ इ राम·
ति प्रथममासिकश्राद्धप्रयोगः संपूर्णः ॥ एवं त्रिपाक्षिक· द्विमासिक· तृतीयमा· चतुर्थमा· पंचमा· ऊनषण्मासिकं· षण्मा २५
सिक· सप्तमासिक· अष्टमा· नवमा· दशमा· एकादशा· ऊनाब्दिक· आब्दिक· ॥ येनैव विधिना प्रथममासिकः कृत स्तेनैवान्ये

विसृज्य ॥ सव्येनाचम्य हरिं स्मरेत् ॥ ततोऽपसव्यं ॥ स्वन्नदानं ॥ नमो वः प्रेतरसायेति वासः ॥ ततो गंधाक्षतादिभिरभ्य
र्च्य संकल्पयेत् ॥ अद्यामुकगोत्रामुकप्रेत द्वादशाहे षोडशश्राद्धांतर्गतप्रथममासिकश्राद्धे एतानि गंधाक्षतपुष्पधूप
दीपनैवेद्यतांबूलयज्ञोपवीताच्छादनानि ते मया दीयन्ते तवोपतिष्ठताम् ॥ ततः सव्येनाचम्य ॥ ऋजुसुतकुशं कृत्वा ब्राह्मण
करे जलदानं ॥ अ पामध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितं ॥ ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवंतु मे इति पाठः ॥ लक्ष्मीर्व
सति पुष्पेषु लक्ष्मीर्वसति पुष्करे ॥ लक्ष्मीर्वसति सदा गोष्ठे सौमनस्यं सदास्तु मे ॥ इति पुष्पं दद्यात् ॥ अक्षतं चास्तु मे पुण्यं
इत्यक्षतं दत्वा ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रथममासिकश्राद्धे यद्दत्तं तदन्नपानादिकमक्षय्यं तवोपतिष्ठताम् ॥ इति
करे जलयुक्तमक्षय्योदकं दद्यात् ॥ उपतिष्ठतामिति तेनोक्ते ॥ अघोराः प्रेतः संतु ॥ दक्षिणां दिशं पश्यन् पठेत् ॥ अघोरा दि
त्यादि ॥ गोत्रं नो वर्द्धतां वर्द्धंतु दातारो नोऽभिवर्द्धंतां वेदाः संततिरेव च ॥ श्राद्धं च नो माव्यगमद्बहुधेयं च अन्नं च नो बहु भवेदति
थींश्च लभेमहि याचितारः स्म नः संतु मया विप्र कंचन इत्युक्त्वा एता एवाशिषः संतु इति ब्राह्मणः पठेत् ॥ कृतापसव्यः स
पवित्रकुशत्रयपिंडोपरि दत्वा ॥ नमो वाचयिष्ये वाच्यतामित्यनुज्ञातः पित्रे नमः इत्युच्यतां अस्तु नमस्ते तेनोक्ते ॥ ऊर्ज्जं दा
नं ॥ ऊर्ज्जं वहंतीरमृतं घृतं पयः कीलालं परिस्रुतमित्यूर्ज्जं दद्यात् ॥ पिंडोपरि वारिधारां दद्यात् ॥ ततो नम्रीभूय पिंडमुत्था

प्रे॰मं॰ सिंचयेत् ॥ यवकुशपूगीफलतांबूलमादाय ॥ उपवीती देवब्राह्मणदक्षिणजानुं स्पृष्ट्वा ॥ ॐ अद्यामुकगोत्रस्यामुकप्रेत
१६ स्य कर्तव्यसपिंडीकरणश्राद्धार्थे अस्याराञ्यौम्य: कर्तव्यपितृप्रेतसपिंडननिमित्तकं पितामहादित्रयश्राद्धसंबंधिनो विश्वे
देवा: कालकामसंज्ञका: सपिंडनश्राद्धकरणाय देवब्राह्मणमामंत्रये ॥ आमंत्रितोस्मीति तेनोक्ते ॥ अक्रोधनेरिति श्राव
येत् ॥ कृतापसव्योदक्षिणाभिमुख: पातितवामजानु: कुशतिलताम्बूलमादाय ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य षोड
शश्राद्धांतर्गतसपिंडीकरणश्राद्धे अनेन तांबूलाद्येन प्रेतब्राह्मणकृत्ये भवान्मयानिमंत्रित: ॥ आमंत्रितोस्मीति प्रतिवचनं
इति प्रेतब्राह्मणनिमंत्र्य ॥ अक्रोधनैरित्यादिश्लोकद्वयं श्रावयेत् ॥ तत: सव्येनाचम्य हरिस्मरणं ॥ पुनरपसव्येन द
क्षिणाभिमुख: पातितवामजानु: ॥ पितृब्राह्मणजानुं स्पृष्ट्वा कुशतिलताम्बूलमादाय ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिं
डीकरणश्राद्धनिमित्तकममुकगोत्रस्यामुकशर्मण: पितामहस्य ताम्बूलाद्येन श्राद्धकरणाय भवंतं पितृब्राह्मणमामंत्रये ॥
आमंत्रितोस्मीति प्रतिवचनं ॥ प्रपितामहवृद्धप्रपितामहयोरेवं वाक्यम् ॥ अक्रोधनैरिति श्रावयेत् ॥ यदा सायं न भवति राम
प्रमादात्तदा प्रातरेव कर्तव्यमामंत्रणं ॥ अथ पादार्घ: ॥ सव्येन पादार्घपात्रं संपाद्य ऋजुकुशयवजलान्यादाय ॥ अद्या २६
मुकगोत्रस्यामुकप्रेतस्य सपिंडीकरणनिमित्तकं पितामहादित्रयश्राद्धसंबंधिनो विश्वेदेवा: कालकामसंज्ञका: एष पा

पिज्ञेयः॥ अनेनोत्तममध्यमप्रकारेणसर्व्वमासिकश्राद्धं बोद्धव्यम्॥ अथसपिंडीश्राद्धप्रयोगः॥ मध्याह्नएवात्रकालः॥ पूर्व्वे
पश्चिमेपंक्त्याकर्त्तव्या॥ पूर्व्वेसांप्रेतपिंडवेदींप्रकल्प्य॥ तत्पश्चिमेविश्वेदेवास्तत्पश्चिमेपितरःस्थानप्रकल्पयेत्॥ यस्यजीवंति॥
पितरःपुत्रस्तुम्रियतेयदि सपिंडीकरणेश्राद्धेतस्यपिंडस्यकागतिः॥ १॥ पितातस्यवसुर्नामरुद्रस्तस्यपितामहः॥ प्रपिता
महादितिर्नामतस्यपिंडस्यकागतिः॥ २॥ होमतर्पणकालेचविवाहेयज्ञकर्मणि॥ गर्भेहीनंकुशंकृत्वापुत्रदारधनक्षयः
॥ ३॥ श्राद्धंकृत्वातुयोभुंक्तेस्वावसंगतेद्विजः॥ यातुधानैस्तु तद्भुक्तंकृतंयथाकृतंभवेत्॥ ४॥ नाशिषंप्रतिगृह्णीयान्नापि॥
विकरणंस्वधा॥ विकरणेनविनाकुर्य्यात्प्रेतश्राद्धानिषोडश॥ विकरणेनविनान्यत्रतदर्थमनुरब्रवीत्॥ प्रेतश्राद्धाधि॥
पितृशब्दस्वधानमस्काराणि॥ प्रार्थनाभिरप्यतांविकराप्रणवरहितानिभवंति॥ स्वधास्थानेतवोपतिष्ठतामितिकर्त्तव्यं॥
पात्रांगुष्ठावगाहश्चउल्मूकोल्लेखनादिकं॥ तृप्तप्रश्नमपोशानंशेषमन्नंतथैवच॥ सदक्षिणाविसर्गश्चसीमांतगमनंत
था॥ अष्टादशपदार्थानिप्रेतश्राद्धेविवर्ज्जयेत्॥ अथश्राद्धप्रक्रिया॥ पूर्व्वदिश्युदङ्मुखंप्रेतब्राह्मणंसंस्थाप्य॥ तत्पश्चि
मव्यवहितेदेशेपूर्व्वाभिमुखंदेवब्राह्मणंसंस्थाप्य॥ तत्पश्चिमव्यवहितेदेशेपितामहादिब्राह्मणंसंस्थाप्य॥ सव्येनाचमनसे
चनं॥ अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा॥ यःस्मरेत्पुंडरीकाक्षःसबाह्याभ्यंतरःशुचिः॥ इतिमंत्रेणश्राद्धद्रव्याणि

वित्रः पवित्रोवेति श्राद्धद्रव्यसेचनं ॥ ततोऽपसव्येन तिलकुशान्गृहीत्वा अग्निष्वात्तादिमंत्रेण दिग्बंधनं कुर्य्यात् ॥ ततः
सव्येनाचम्य जलजवकुशमादाय प्रतिज्ञां कुर्य्यात् ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्तिपूर्वकाक्षय्यस्वर्गाद्यु
त्तमलोकप्राप्तिकामः तथा चामुकगोत्राणां पितामहप्रपितामहवृद्धप्रपितामहानाममुकामुकशर्मणां पितामहादित्रय
श्राद्धसंबंधिकालकामविश्वेदेवपूर्वकानां षोडशश्राद्धांतर्गतसपिंडीकरणश्राद्धमहं करिष्ये ॥ कुरुष्वेत्यनुज्ञातः ॥ गाय
त्रीं जपेत् ॥ देवताभ्यश्च पितृभ्यश्चेत्यादि पठेत् ॥ ततः सव्येन जवकुशजलान्यादाय ॥ अद्येह प्रेतपितामहादित्रयश्राद्धसं
बंधिनो विश्वेदेवाः कालकामनामसंज्ञकाः इदं कौशमासनं वो नमः ॥ अथ यवमादाय विश्वेदेवावाहनं ॥ विश्वान्देवा
नावाहयिष्ये । ॐ आवाहयेत्यनुज्ञातः ॥ विश्वेदेवास आगत विश्वेदेवाः शृणुतेम ॐ हवं ये मे अंतरिक्ष इत्यादि पठित्वा
॥ विश्वेदेवहस्तार्घपात्रमहं करिष्ये ॥ कुरुष्व ॥ हस्तार्घपात्रस्यासनं आसने पात्रं । पात्रे पवित्रकं ॥ पवित्रस्थो वैष्णव्यावि
ति ॥ शन्नोदेवीति जलं ॥ यवोसीति यवान् ॥ गंधद्वारामिति चंदनं । श्रीश्चतेलक्ष्मीति तुलसीदलं पुष्पं च ॥ अपसव्येन ति
लोसीति तिलदानं ॥ सव्येन देवहस्तार्घपात्रसंपन्नं सुसंपन्नमस्तु ॥ अर्घपात्रं वामहस्ते कृत्वा । ॐ नमो नारायणायेति
पठित्वा त्रकं मन्त्रपात्रोपरि धृत्वा । ॐ यादिव्या आपः पयसा संबभूवुर्या अंतरिक्षा उत पार्थिवीर्या हिरण्यवर्णा यज्ञियाः ।

दार्घेवोनमः॥ ततोऽपसव्येन ऋजुकुशतिलजलान्यादाय॥ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिंडीकरणश्राद्धे एषपादा
र्घस्ते मयादीयते तवोपतिष्ठताम्॥ ततः सव्येनाचम्य विष्णुं स्मृत्वा॥ अपसव्यं॥ अद्यामुकगोत्रा अस्मत्पितामहप्रपितामह
हवृद्धप्रपितामहा अमुकामुकशर्माणः अमुकगोत्रस्यामुकप्रेतस्य सपिंडीकरणश्राद्धनिमित्तकं एषपादार्घो युष्मभ्यं स्वधा
॥ सव्येनाचमनीयं दद्यात्॥ प्रेतपादार्घं पितामहादिपादार्घे नियोजयेत्॥ ये समाना इति केषांचिन्मते॥ पादौ प्रक्षाल्या
चम्य सव्येन॥ आगतं वः सुस्वागतं इदमासनमास्यतां नहमास्ये॥ ततोऽपसव्येन॥ आगतस्ते सुस्वागतमिदमासनमा
स्यतामहमास्ये इति प्रेतब्राह्मणे आसनं दत्वा॥ पुनः सव्येनाचम्य पुनरपसव्येन॥ आगता भूयं सुस्वागता नावयमिदमा
सनमास्यतामहमास्ये इति पितामहादिब्राह्मणे॥ सव्येन कर्मपात्रं पूरयेत्॥ कर्मपात्रमहं करिष्ये कुरुष्व॥ कर्मपात्रस्या
सनं आसने पात्रं पात्रे पवित्रकं॥ पवित्रस्थो वैष्णव्या इति पवित्रकं॥ शन्नोदेवी इति जलं॥ यवोसीति यवान्॥ गंधपुष्पा
दिकं तूष्णीं दद्यात्॥ अपसव्येन॥ तिलोसीति तिलदानं॥ सव्येन कर्मपात्रं संपन्नमपसव्येन सुसंपन्नमस्तु॥ सव्येनाचम्य
पूर्वोक्तेस्वागतमिति वाक्यं कुशद्वयेन दैवे ब्राह्मणद्वयं प्राङ्मुखं॥ पितृब्राह्मणान् त्रीनुत्तराभिमुखानुपवेश्य॥ पितामहादि
त्रयासनसमीपे ब्राह्मणदक्षिणवामे वा प्राङ्मुखं घृताक्तदीपं दद्यात्॥ पितृब्राह्मणवामभागे तिलतैलेन दीपं दद्यात्॥ अप

नामहारित्रयश्राद्ध संबंधिनो विश्वेदेवाः कालकामसंज्ञका इदमन्नं सोदकं सोपकरणं विश्वेदेवावो नमः॥ इतिदेव
कार्य्यं निर्वर्त्य॥ ततोऽपसव्यं॥ अद्यामुकगोत्रामुकप्रेत इदं कौशमासनं ते मयादीयते तेनवोपतिष्ठताम्॥ सव्यं कृत्वाचम्य
हस्तौ पादौ प्रक्षाल्य॥ प्रेतकार्य्यं कृत्वा सर्वत्राचम्य॥ पुनरपसव्येन मोटितकुशत्रयमादाय॥ अद्यामुकगोत्रा अमु
कपितामहप्रपितामहवृद्धप्रपितामहा अमुकामुकशर्माणः अमुकप्रेतसपिंडीकरणश्राद्धे इदं कौशमासनं त्रेधाविभ
ज्य युष्मभ्यं स्वधा॥ प्रेतं वर्जयित्वा पितामहादीन्नावाहनं॥ ततस्तिलमादाय॥ अद्यामुकगोत्रा अमुकपितामहप्रपि
तामहवृद्धप्रपितामहान् अमुकामुकशर्माणः आवाहयिष्ये॰ ॐ आवाहयेत्यनुज्ञातः॥ ॐ उशंतस्त्वा निधीमहीउशं
तः समिधीमहीउशन्नुशतआवाहयपितॄन् हविषेअत्तवे तिलानवकीर्य्य॥ आयंतुनः पितरः सौम्यास्त्वग्निष्वात्ता पथि
भिर्देवयानैः अस्मिन्यज्ञे स्वधयामदंतो धिब्रुवंतु ते ऽवंत्वस्मान्॥ इति पठित्वा तिलानवकीर्य्य॥ ततः प्रेतार्घं दद्यात्॥
कर्मपात्रजलेन शन्नोदेवीत्यादिसमस्तमंत्रैः प्रेतहस्तार्घं संपाद्य॥ प्रेतार्घपात्रमादाय वामहस्ते कृत्वा तूष्णीं पवित्रादि
कं प्रेतब्राह्मणकरे दत्वा॰ यादिव्येति पठित्वा॥ प्रेतब्राह्मणकरे जलं पवित्रकं च दत्वा-जलचतुर्थभागमादाय॥ अद्या
मुकगोत्रस्य पितुरमुकप्रेतस्य सपिंडिकरणश्राद्धे एष हस्तार्घपात्रस्ते मयादीयते तेनवोपतिष्ठताम्॥ चतुर्थभागज

स्तानापः शिवाः संज्ञं स्योनासुहवाभवंतु ॥ इतिपठित्वा ब्राह्मणहस्तेजलंपवित्रकंचदत्वा पितामहादित्रयश्राद्धसंबं
धिनोविश्वेदेवाः कालकामसंज्ञकाः अमुकप्रेतस्यसपिंडीकरणश्राद्धेएषहस्तार्घोवोनमः ॥ ततश्चक्षुर्दैवहितंपुरस्तादि
त्यादिपठित्वार्घपात्रंन्युब्जीकुर्यादधोमुखंसंस्थाप्य ॥ विश्वेदेवब्राह्मणंसंपूज्य ॥ वस्त्रगंधाक्षतपुष्पधूपदीपनैवेद्या
दिभिः ॥ नमोस्त्वनंतायेत्यादिमंत्रेणपूजयेत् ॥ अद्येहामुकप्रेतपितामहादित्रयश्राद्धसंबंधिनोविश्वेदेवाः कालकाम
संज्ञकाः एतान्यर्च्चनानिगंधाक्षतपुष्पधूपदीपनैवेद्यतांबूलपूगीफलदक्षिणायज्ञोपवीतवासांसिवोनमः ॥ अर्च्चनवि
धौसर्वंपरिपूर्णमस्तु ॥ सव्यापसव्याभ्यांजलेनमंडलंकृत्वा ॥ अग्नौकरणमहंकरिष्ये ॥ कुरुष्व ॥ सव्येनैवपुटकजलेपा
यसेनजुहुयात् ॥ अनेनमंत्रेण ॥ ॐ अग्नयेकव्यवाहनायस्वाहा ॰ इदमग्नयेकव्यवाहनाय ॥ सोमायपितृमतेस्वा
हा इदंसोमायपितृमते ॥ कव्यवाहनायवैवस्वतायतुष्णीं ॥ शेषमन्नंपितृपात्रेणमेलयेत् ॥ अपसव्येन ॥ इदमन्न
भूस्वामिपितृभ्योनमः ॥ ततः सव्यंकृत्वाचम्य ॥ ततोऽन्नसंकल्पः ॥ मधुमयान्नंविश्वेदेवपात्रेपरिवेष्य पात्रमालभ्य
॥ पृथिवीतेपात्रंद्यौरपिधानंमिति इदंविष्णुरिति ॥ इदमन्नमिमाआपः इदमाज्यमिदमैसवमेतत्सवेहविरिति ॥ अप
हतादूति ॥ अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणश्राद्धे अद्यामुकगोत्राः पितामहःप्रपितामहवृद्धप्रपि

मं. घँदद्यात्॥ प्रेतहस्तार्घपात्रंप्रेतब्राह्मणवामपार्श्वेन्युब्जीकृत्यप्रेतायस्थानमसीति तदुपरिकुशान्निक्षिप्य॥ ततः सव्येना
२९ चम्य॥ अपसव्येन॥ पितृपात्रंपितामहादि द्विजवामपार्श्वेन्युब्जीकृत्याधोमुखंनिवेशयेत्॥ अथजलक्षीरदधिघृततं
डुलतिलसर्षपकुशत्रयाणिपुष्पाणिदीपेचइतिविशेषः॥ आचमनंहस्तार्घपर्यंतंप्रेतपितरंस्वधापितृभ्योदद्यात्॥
ततोऽर्चनं॥ नमोस्त्वनंतायेतिगन्धपुष्पादिभिः प्रेतब्राह्मणंसंपूज्य॥ अद्यामुकगोत्रस्यामुकप्रेतस्यसपिंडीकरणश्राद्धे
गंधाक्षतपुष्पधूपदीपनैवेद्यादीनीदमर्चनंतेमयादीयतेतवोपतिष्ठतां॥ सव्यंआचम्य॥ हस्तौपादौप्रक्षाल्य॥ ततोऽप
सव्यं॥ पितामहादिब्राह्मणंगंधादिभिःसंपूज्य॥ अद्यामुकगोत्रस्यामुकप्रेतस्यसपिंडीकरणश्राद्धेऽमुकगोत्राःपितामह
प्रपितामहवृद्धप्रपितामहाअमुकामुकशर्माणःइदमर्चनं·एतान्यत्रपत्रासनगंधपुष्पधूपदीपनैवेद्यादीनियथाभाग
वासांसि अथाक्षयतृप्तिहेतोस्त्रिधाविभज्ययुष्मभ्यंस्वधा॥ ततोमधुमपान्नपात्रमालभ्य॥ ततोऽपसव्येनप्रेतायान्नंदद्या
त्॥ ततोमंडलंविधाय·तदुपरिपात्राण्यावलीदत्वान्नपरिवेष्य·पृथिवीतेपात्रमिति पठित्वावगाहनंकृत्वा॥ अद्यामुकगो राम.
त्रामुकप्रेतइदमन्नंसोपकरणंमयादीयतेतवोपतिष्ठतां॥ सव्येनहस्तौपादौप्रक्षाल्याचम्य॥ हरिंस्मरेत्॥ ततोऽपसव्यं॥ २९
पितामहादिपात्रेअन्नंपरिविष्य·पृथिवीतेपात्रमालभ्य·इदंविष्णुरिति·इदमन्नंइमाआपःइदमाज्यंइदमैस्वसन्तस

लं अन्नपात्रोपरि हृत्वा पात्रं भूमौ निधाय ॥ सव्यं कृत्वा हस्तौ पादौ प्रक्षाल्याचम्य ॥ पुनरपसव्यं ॥ ततः पितामहादिहस्ता
र्घपात्रत्रयं पृथक्पृथक्स्थापनं ॥ कर्मपात्रजलेन शन्नोदेवीत्यादिसमस्तमंत्रैरर्घपात्राणि संपाद्य पूरयेत् ॥ ततः प्रेता
र्घपात्रावशिष्टजलं भागत्रयं कृत्वा पितामहादिपात्रत्रये पृथक्पृथक् मेलयेत् ॥ तत्र मंत्राः ॥ ये समानाः समनसः पितरो
यमराज्ये तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पतां · ये समानाः समनसो जीवा जीवेषु मामकाः तेषां श्रीर्मयि कल्पतां
॥ अस्मिँल्लोके शतँ समाः संसृजं त्वापः पृथिवी वायुरग्निः प्रजापतिः संसृजध्वं पूर्वाभिः पितृभ्यः सह समानो वा कृतिः
॥ समाना हृदा समानमस्तु यो मनो यथा वः पितृभिः सप्नहासति ॥ संगच्छध्वं संवदध्वं सो वा मनसि जानतां ॥ दिवा भागं
यथा सर्वे संजानाना उपासते ॥ अनेन मंत्रेण पितामहपात्रे तृतीयभागं जलं क्षिपेत् ॥ एष वोऽनुगतः प्रेतः ये पितरस्त्व
दहामि वः ॥ शिवमस्त्विति शेषाणां जायतां चिरजीविनः ॥ संसृजंतु · पुनर्ये समाना इति मंत्रेण द्वितीयभागं जलं प्रपिताम
हपात्रे क्षिपेत् ॥ पुनः ये समानेति · संसृजं त्वापः एष वोऽनुगत इत्यादि पठित्वा ॥ प्रेतार्घपात्रस्थतृतीयभागं जलं वृद्धप्रपि
तामहपात्रे क्षिपेत् ॥ सव्येनाचम्य ॥ ततोऽपसव्यं ॥ पितामहपात्रं वामहस्ते कृत्वा · पवित्रमन्नपात्रोपरि धृत्वा · या दिव्या
इति पठित्वा ॥ अद्यामुकगोत्र पितामहामुकशर्मन् एष हस्तार्घस्तुभ्यं स्वधा ॥ एवं प्रपितामह वृद्धप्रपितामहयोरपि हस्ता

प्रे·मं· थित्वा॥ येरूपाणिप्रतिमुंचमानाःसुराःसंतःस्वधयाचरंतिपुरापुरोनिपुरोयेभरंत्यग्निष्टांल्लोकान्प्रणुदास्मद्वइस्मु
३० ल्मूकश्रामणं॥ अयोध्यामथुरामायेतिवेदिकाशोचनं॥ छिन्नमूलकुशास्तरणं॥ सव्यमाचम्य·देवताभ्यइतिजपित्वा
॥ततोऽपसव्येनप्रेतपिंडास्थानावनेजलंदद्यात्॥ अद्यामुकगोत्रपितरमुकप्रेतत्वविमुक्तिपूर्वकाक्षय्यस्वर्गाद्युत्तमलो
कप्राप्तिकामः इदंपिंडास्थानावनेजनजलंतेमयादीयतेतवोपतिष्ठतां॥ सव्येनहस्तपादौप्रक्षाल्याचम्य॥पुनरपसव्य
॥पितामहादिभ्यःपिंडास्थानावनेजनजलंदद्यात्॥ अद्यामुकगोत्रपिता महामुकशर्मन्इदंपिंडास्थानावनेजनजलंअ
त्रवनेनिक्ष्वतेस्वधा॥ एवंप्रपितामहवृद्धप्रपितामहयोःपिंडास्थनंदद्यात्॥ अथपिंडदानं॥ अद्यामुकगोत्रपितरमुक
प्रेतप्रेतत्वविमुक्तिपूर्वोक्षय्यस्वर्गाद्युत्तमलोकप्राप्तिकामः एषपिंडअमृतस्वरूपअक्षय्यतृप्तिहेतोस्तेमयादीयतेत
वोपतिष्ठतां॥ लेपभागादिकंकरप्रोक्षणंदद्यात्॥ सव्येनाचमनं॥ अपसव्यं॥ अक्षतंगृहीत्वाउदङ्मुखीभूयभास्वरमू
र्तिंपितरंध्यायेत्॥ अत्रप्रेतमादयध्वं·यथाभगमावृषापिषत्॥ पिंडोपरिअक्षतंदद्यात्॥ ततःपिंडप्रत्यवनेजनज राम·
लंदद्यात्॥ अत्रप्रेतमादयध्वं·यथाभागमावृषापिषत्॥ पिंडोपरिअक्षतंदद्यात्॥ ततःपिंडप्रत्यवनेजननजलंदद्या ३०
त्॥ अद्यामुकगोत्रामुकप्रेतइदंपिंडप्रत्यवनेजननजलंतेमयादीयतेतवोपतिष्ठतोम्॥ सव्येनहस्तौपादौप्रक्षाल्या

वेंहर्वि: अपहतासुरा इति· अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिंडीकरणश्राद्धे अद्यामुकगोत्राः पितामह प्रपिता।
महवृद्धप्रपितामहाः अमुकामुकशर्माणः इदमन्नं सोपस्करणं त्रेधा विभज्य युष्मभ्यं स्वधा॥ इदं तेभ्य त्यायोशानेयु।
यासु खंयुषध्वं आपोसानं दद्यात्॥ ततः सव्येन मधुवाता इति पठनं॥ ॐ मधुवाता ऋतायते मधुक्षरंतु सिंधवः॥ माध्वी
नः संतोषधिः मधुनक्तमुतोषसो मधु — मत्पार्थिवꣳरजः मधुद्यौरस्तु नः पिता मधुमान्नो वनस्पतिः॥ मधुमाꣳ
अस्तु सूर्यः माध्वीर्गावो भवंतु नः मधु ३ अन्नसंकल्पसिद्धिरस्तु॥ सहस्रशीर्षा पठनं ध्यानं च कृत्वा॥ अपसव्येन दक्षि।
णस्यां दिशि विकराशानं दद्यात्॥ तथा च बृहस्पतिः॥ आभ्युदयिके पूर्वं स्यात्। पार्वणे पश्चिमे भवेत्॥ निर्थीद्राचुत्तरे कु
र्यात् प्रेतश्राद्धे तु दक्षिणे॥ असंस्कृतप्रणीतानां मित्यायाशनं॥ अग्निदग्धाश्च ये जीवा इत्यादि विकरदानं॥ सव्येन
हस्तौ पादौ प्रक्षाल्य द्विराचम्य॥ हरिं स्मृत्वा। अपसव्यं। प्रेतब्राह्मणाय पृष्ट्वा गंडूषजलं दद्यात्॥ स्वादितमिति पृच्छेत्· स्व
दितमिति· ततः पितामहादिद्विजान्प्रति जलं दानं· तृप्ताः स्थ इति पृच्छेत्· तृप्ताः स्म·॥ शेषमन्नं किं कृत्वा· इष्टैः सह भुज्यतां·
पिंडदानमहं करिष्ये कुरुष्वेत्यनुज्ञातः॥ स्थानद्वये पूर्वपरे वेदीं कृत्वा॥ पूर्वे दक्षिणोत्तरा यतं प्रेतवेद्यां· अपरे पूर्वाप
रायते पितामहादिवेद्यां च कृत्वा॥ अपहता असुरा रक्षांꣳसि वेदिषदः इति वेद्यां रेखाकरणं॥ उभयोपर्य्यंगारं भ्राम

स्वर्गोत्तमलोकप्राप्तिकामः सपिंडीकरणश्राद्धे अद्यामुकगोत्राः पितामहप्रपितामहवृद्धप्रपितामहा अमुकामुक
शर्माणः इदं पिंडार्चनमन्त्रगंधाक्षतपुष्पधूपदीपनैवेद्यादीनि वासांसि त्रेधा विभज्य युष्मभ्यं स्वधा ॥ अथार्घप्रेतस्य
पिंडं त्रिधा कृत्वा स्वर्णरजतक्षुरैः कुशैर्वा· येसमाना इति द्वाभ्यां मंत्राभ्यां पिंडं कल्पयित्वा ॥ प्रथमखंडे पितामहपिंडे
योजयेत् ॥ द्वितीयखंडं प्रपितामहपिंडे योजयेत् । तृतीयखंडं वृद्धप्रपितामहपिंडे योजयेत् ॥ ततः पितामहादि
पिंडत्रयं प्रेतपिंडभागेन वर्तुलं कृत्वा मंत्रं पठेत् ॥ तत्र मंत्रः ॥ ॐ येसमानाः समनसः पितरो यमराज्ये तेषां लोकः
स्वधा नमो यज्ञो देवेषु कल्पतां ॥ येसमानाः समनसो जीवा जीवेषु मामकास्तेषां श्रीर्मयि कल्पतामस्मिंल्लोके शतं स
माः ॥ संसृजतु त्वा पृथिवी वायुरग्निः प्रजापतिः संसृजध्वं पूर्व्येभिस्त्रिभिश्च पितृभिः सह ॥ समानानीव आकूतिः समा
ना हृदयानि वः समानमस्तु मनो वा यथा वः सुसहासति ॥ संगच्छध्वं संवदध्वं संवो मनांसि हायतां ॥ देवाभागं यथापूर्वे संजा
नानामुपासते· एषवोनुगतः प्रेतः पितरस्तां रक्षतामिव ॥ शिवमस्त् [illegible] लोकानां जायतां चिरंजीविनां ॥ इति मन्त्रद्वये
नत्रयेण वा· प्रत्येकं प्रेतपिंडभागेन पितामहादिपिंडसमवर्तुलं कुर्यात् ॥ प्रत्येकमर्घादिभिरभ्यर्च्य नमोस्त्वनंताये

चम्य॥ ततोऽपसव्येनपितामहादीनांपिंडंदद्यात्॥ अद्यामुकगोत्रस्यामुकप्रेतस्यसपिंडीकरणश्राद्धेअद्यामुकशर्मे
पितामहाएषपिंडोऽमृतःस्वरूपअस्मयत्तृप्तिहेतोस्तुभ्यंस्वधा॥ एवंप्रपितामहवृद्धप्रपितामहयोरपिपिंडंदद्यात्॥ मू
लपुरुषेभ्योनमः॥ अग्रविभागेइत्यादिलेपभागभुजस्तृप्यंतुइतिकरप्रोक्षणं॥ सव्येनाचम्याक्षतंगृहीत्वोदङ्मुखी
भूयस्वासंनियम्यपितरंध्यायेत्॥ अत्रपितरोमादयध्वंयथाभागमावृषायिषत्॥ अथसव्येनदक्षिणाभिमुखोभू
त्वा॥ अमीमदंतपितरोयथाभागमावृषायिषत्॥ इत्यक्षतंपिंडोपरिदद्यात्॥ ततःपिंडप्रत्यवनेजनजलंदद्यात्॥ अ
द्यामुकगोत्रपितामहामुकशर्मन्इदंपिंडप्रत्यवनेजनजलंतुभ्यंस्वधा॥ एवंप्रपितामहवृद्धप्रपितामहयोरप्यवनेज
नजलंदद्यात्॥ ततोनीवीविस्रंसनं॥ ततःप्रेतपिंडार्चनं॥ अथसूत्रदानं॥ नमस्तेप्रेतरसायप्रेतोवासःकुमारःपुष्करः
स्रजंयथाइहपुरुषोशयेत्॥ इतिसूत्रदानं॥ प्रेतपिंडंगंधादिभिःसंपूज्य॥ अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडी
करणश्राद्धेइदंपिंडार्चनंअत्रगंधाक्षतपुष्पधूपदीपनैवेद्यादीनिवासांसितेमयादीयनेतवोपतिष्ठताम्॥ इयधेनोर्ज्जंदद्या
त्॥ सव्यंहस्तपादौप्रक्षाल्याचम्य॥ ततोऽपसव्येनपितामहादिपिंडार्चनंगंधादिभिः॥ अथसूत्रदानं॥ नमोवःपितरोर
सायेतिपठित्वापिंडोपरिसूत्रंदत्वा॥ गंधाद्यैःसंपूज्य॥ अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यप्रेतत्वविमुक्तिपूर्वकास्य

ष्ये ॥ अमुकगोत्रायामुकशर्मणे पित्रे स्वधोच्यतामस्तु स्वधा ॥ अद्यामुकगोत्रायामुकशर्मणे पितामहाय स्वधो-
च्यतामस्तु स्वधा ॥ एवं प्रपितामहवृद्धप्रपितामहाभ्यां दद्यात् ॥ ततोर्ज्जेदानं ॥ ॐ ऊर्ज्जं वहंतीरमृतं घृतं पयः कि-
लालं परिस्रुतं स्वधास्थ तर्पयत मे पितॄन् ॥ इमूर्ज्जं दत्वा ॥ पिंडाः संपन्नाः सुसंपन्ना भवंतु ॥ पिंडमुत्थापयामि ॥
पिंडानुत्थापयाघ्राणं चालयेत् ॥ सव्येन शास्त्रं चक्रं लिखित्वा पूजनं च विधाय ॥ तदुपरि गयायां पितृरूपेणेति
स्थापयेत् ॥ अर्घपात्रमुत्थापनं कृत्वा दक्षिणां दद्यात् ॥ अद्येह कृतैतत्सपिंडीकरणश्राद्धांगभूतपितामहादित्रय
श्राद्धसंबंधिकालकामसंज्ञकविश्वेदेवश्राद्धप्रतिष्ठासिद्ध्यर्थं दक्षिणां हिरण्यमग्निदैवतं तन्मूल्योपकल्पितं द्रव्यं वा अ-
मुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ॥ ततोऽपसव्येन पित्र्यर्घपात्रमुत्तानीकृत्य ॥ अमुकगोत्राणा-
पितामहप्रपितामहवृद्धप्रपितामहानाममुकामुकशर्मणां विश्वेदेव[illegible]वेककृतैतत्सपिंडीकरणश्राद्धप्रतिष्ठासि-
द्ध्यर्थं दक्षिणां रजतं चंद्रदैवतं तन्मूल्योपकल्पितं द्रव्यं वा अमुकशर्म मुक[illegible]णाय तुभ्यमहं संप्रददे ॥ दीपनिर्वापणं
॥ विसर्जनं ॥ सव्येन विश्वेदेवाः वाजे वाजे वत वाजिनो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादयध्वं तृप्ता

येनिगंधादिभिः संपूज्य ॥ सव्येनाचम्य ॥ विश्वेदेवादिब्राह्मणकरेषु कु[illegible]यं दत्त्वा ॥ सुप्रोक्षितमस्तु शिवा आपः सं
तु· सौमनस्यमस्तु· अक्षतं चारिष्टं चास्तु ॥ पुनरपसव्येन पितामहादि[illegible]ह्मणं प्रति सुप्रोक्षितमस्तु का पार्वणवत् ॥
तेजो मूर्द्धाभिषेकः ॥ अस्मत्कुले दीर्घमायुरस्तु शांतिरस्तु पुष्टिरस्तु वृद्धि[illegible]स्तिलकुशोदकसहितेन मूर्द्धानमभिषिंचे
त् ॥ सव्यं ॥ आपामध्ये स्थिता देवा सर्वमप्सु प्रतिष्ठितं । ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवंतु मे ॥ लक्ष्मीर्वसति
पुष्पेषु लक्ष्मीर्वसति पुष्करे ॥ लक्ष्मीर्वसति सद्गोष्ठे सौमनस्यं सदास्तु मे ॥ अथाक्षय्योदकदानम् ॥ अमुकगोत्र
स्य पितुरमुकशर्मणः इदं सतिलदन्नपानादिकं यद्दीयमानमुदकं तदक्षय्यमस्तु ॥ अद्यामुकगोत्रस्य पितामहस्यामुक
शर्मणः अत्र श्राद्धे दत्तं सतिलदन्नपानादिकं यद्दीयमानमुदकं तदक्षय्यमस्तु ॥ एवं प्रपितामहवृद्धप्रपितामहयोः
षष्ठ्येकवचनेनाक्षय्योदकं दद्यात् ॥ ततः सव्यं ॥ ॐ अघोराः पितरः संतु गोत्रं नो वर्द्धतां वेदाः संततिरेव च श्रद्धा
च नो मा व्यगमत्· बहुधेयं च नो· अन्नं च नो बहु भवेत् ॥ अतिथींश्च लभेमहि याचितारः श्च नः संतु मास्म याचि
ष्म कंचन इत्येवाशिषः संतु ॥ ततोऽपसव्यं स्वधावाचनं ॥ पुटकमध्ये तिलजलपवित्रकं गृहीत्वा स्वधां वाचयि

भा·मं·
३३

गणपतिंध्यायेत्॥ अथसंकल्पः॥ ॐ श्रीमद्भागवतेमहापुराणे ॐ विष्णुः२ अद्योनमःपरमात्मनेइत्यादिप
ठित्वा·मासानांमासोत्तमे अमुकमासी·अमुकपक्षे·अमुकतिथौ अमुकवासरे·यथानक्षत्रयोगलग्नमुहूर्तेकर
णान्वितायां·अमुकगोत्रोत्पन्नामुकशर्मा·अमुकगोत्रस्यपितुरमुकशर्मणःकृतैतत्सपिंडनांतेहवनकर्मक
र्तुंप्रथ्वीगौरिगणेशकलशस्थापननवग्रहा वाहनपूजनयथासामिगृहीभिःप्रतिज्ञामहंकरिष्ये॥इतिसं
कल्पः॥ततःस्वस्त्ययनं॥ततोभूमिस्पर्शनं॥ गौरिस्पर्शःकलशकरणं·कलशगणपत्यादीनामावाहपूजयेत्॥
नवग्रहावाहनादिंकंचकुर्य्यात्॥ तदंतेब्राह्मणवरणं·तदंतेशय्यादानेपूजादानादिसर्वेविधेयं॥ पददानंहवनंचे
ति॥ किंवाहवनेपददानेवेतिकेचित्॥अथत्रयोदशाहेपददानेपूजाविधाय॥ प्रथमंवरणं·पश्चात्पददानं॥ अ
द्येत्यादिपठित्वा·अमुकगोत्रोत्पन्नामुकशर्मा·अमुकगोत्रस्यपितुर[illegible]कशर्मणः।कृतैतत्सपिंडनांतममुकश्रा
द्धानांतरेत्रयोदशाहेअमुकगोत्रप्रवरवेदाध्यायिनंब्राह्मणममुक[illegible]होहवनकर्मकर्तुंएभिर्गंधाक्षतपुष्पा
दियज्ञोपवीतद्रव्यवस्त्रादिभिस्त्वामहंव्रणे॥ वृतोस्मीतिप्रतिवचनंब्राह्म[illegible]वदेत्·इतिवरणं॥अथपददानं॥

राम
३३

मातयपिभिर्देवजानैः॥ आमावाजस्यप्रसवोजगम्यादिमेद्यावापृथिवी[illegible]श्वरूपेणआमागंतापितरामातराचा
मासोअमृतत्वेनगम्यात् इतिकर्मपात्रोदकेनप्रदक्षिणीकृत्वाचमो[illegible]अ[illegible]श्राद्धेयत्कृतं तत्सुकृतमस्तुयन्न।
कृतंतत्सर्वंब्राह्मणवचनात्परिपूर्णमस्तु॥ सव्येनाचम्यहरिंस्मृत्वा[illegible] आयुःप्रजाःधनंविद्यांस्वर्गंमोक्षंसुखा
नि च॥ प्रयच्छंतुमहाराज्यंप्रीतांनृणांपितामहाइत्याशिषासंतु॥ अथाब्दांतेनित्यश्राद्धप्रकारवाक्यम्॥ अद्यामुक
गोत्रस्यामुकप्रेतस्यपितुरमुकशर्मणअक्षय्यस्वर्गाद्युत्तमलोकवासकामेनयाद्वादशांमारभ्यआब्दिकपर्यन्तम्
मिदंषष्ठ्यधिकशतत्रयकोशिकाजलपूर्णघटैकसहितंतिलतंडुलदुग्धजलैर्युतंमहापथोपशांत्यर्थंआमान्नश्रा
द्धंतुभ्यंस्वधा॥ मयारोपितेनतेनवोपतिष्ठतांमितिकेचित्॥ अथसपिंडीकरणांतेत्रयोदशाहेपददानं॥ तथाचगारु
डेकृत्यवाक्यं॥ छत्रोपानहवस्त्राणिमुद्रिकाचकमंडलुं॥ आसनंभाजनंचैवपदंसप्तविधंस्मृतं॥१॥ देयानिसर्व
वस्तूनिवरिष्ठानित्रयोदशे॥ योददातिमृतस्येहजीवन्वाप्यात्महेतवे॥२॥ अथसपिंडांतेहवनविधि॥ वेदान्यठ
न्ब्राह्मणःगृहंगत्वापूर्वमुखोपविष्टः॥ तत्रघटमानीयकुंकुमादिनागणपतिंस्थापयेत्॥ प्रथमसूत्रजलिंबध्वा